

# चन्दमामा

## जुलै - १९९६



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००




# चन्दमामा

संस्थापकः - **'चक्रपाणिः'** सञ्चालकः - **'नागिरेड्डी'**

## मौलिकशिक्षणस्य आवश्यकता

अन्यत् एकं शैक्षणिकं वर्षं सम्प्राप्तम् अस्ति । विद्यालय-महाविद्यालयाः उद्घाटिताः सन्ति । एतेषु प्रवेशं प्राप्नुवतां सङ्ख्या तावत् वर्षे वर्षे वर्धमाना दृश्यते । किन्तु एतेषु विद्यालयेषु दीयमानायाः विद्यायाः गुणस्तरः किं वर्धमानः अस्ति ?



बेङ्गलूरुनगरीया 'इण्डियन् एकाडमी आफ् सैयन्स्'नामिका संस्था वदति - ''दशवर्षेभ्यः पूर्वं भारते विद्यालयं प्रति गन्तॄणां छात्राणां सङ्ख्या १२०, ००० आसीत् । ततः प्रतिवर्षं ३% वृद्धिः जायमाना अस्ति'' इति । एतां छात्रासङ्ख्यावृद्धिं विद्यालयानां स्थितिं च यदि वयं तोलयेम तर्हि विलक्षणा विसङ्गतिः अस्माकं पुरतः दृश्यते । ६०% विद्यालयाः एकेन कृष्णफलकेनापि युक्ताः न सन्ति ! ३०% विद्यालयाः ग्रन्थालयसौलभ्येन प्रयोगालयसौलभ्येन वा युक्ताः न सन्ति ।

एतादृशस्थितौ किं विद्यालयाः मौलिकशिक्षणस्य दाने समर्थाः भवेयुः ? अतः एवं वक्तुं शक्यते यत् एते विद्यालयाः 'विद्याविक्रयालयाः' इति । एतादृशानां विद्यालयानाम् आरम्भं कृत्वा निर्वहणादिविषये ये विशेषतः न चिन्तयन्ति, यन्त्रागाराणां चालनम् इव विद्यालयानां सञ्चालनम् अपि आयमूलत्वेन भावयन्ति, बालानां भविष्यतः विषये ये गाम्भीर्येण न चिन्तयन्ति ते अत्र वस्तुतः निन्दनीयाः भवन्ति ।

एषः मौलिकतायाः ह्रासः 'उच्च'विद्यायाः दाने उद्युक्तासु संस्थासु अपि दृश्यते । पूर्वप्रस्तुतायाः संस्थायाः सर्वेक्षणात् ज्ञायते यत् चत्वारिंशद्वर्षेभ्यः पूर्वं विज्ञानादिक्षेत्रेषु ३०%-३२% विद्यार्थिनः प्रवेशं प्राप्नुवन्ति स्म, किन्तु इदानीं १९% - २०% विद्यार्थिनः अपि भागं वहन्तः न सन्ति इति । महाविद्यालयाः वृत्तिपरविद्यालयाः वा विज्ञानाध्ययनोचिताः व्यवस्थाः न अर्हन्ति इत्येतत् एव एतस्य ह्रासस्य कारणम् अस्ति ।

अतः देशप्रगतिसाधनार्थम् अपेक्षितस्य मौलिकशिक्षणस्य विषये चिन्तयितुम् एषः सुयोग्यः कालः अस्ति ।

सम्पुटः - १३ जुलै - १९९६ सञ्चिका - ४

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. - ७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अकिञ्चनः - A have-not
अञ्जलिः - Hands cupped in the form of a vessel
अधिकृतरूपेण - Authoritatively
अनाहूतः - Uninvited
अविहाय - Not excluding
अशनम् - Food
अश्रुतपूर्वम् - Unheard of
आक्षेपः - Objection
आधिपत्यम् - Ownership
उत्कर्षः - Rising to prosperity
उत्सः - Spring(water)
उद्दीपनम् - Increase
गणितम् - Counted
गरिमा - Superiority
तूणीरम् - Quiver
दशा - Situation
निराधारः - Without basis
निर्लज्जता - Shamelessness
निर्वेदः - Unenthusiastic
निष्क्रियता - Sluggishness
परिवृतः - Sorrounded
प्रतिरोधः - Opposition
प्रतिस्पर्धी - Rival
प्रमादः - Mistake
प्रवृत्तिः - Habit
भोजोत्सवः - Feast
मण्डूकः - Frog
लिम्पति - Smears
वयनम् - Weaving
वसनम् - Cloth
वितथम् - Untrue
व्याक्षिपति - Postpones
व्रीहिः - Paddy
शयाना - Lying along
शोचनीया - Pitiable
श्लथयति - Unweaves
श्लाघते - Praises
सार्थक्यम् - Fulfilment

* * *

**वार्ताविशेषः -**

# दक्षिणकोरियादेशे निर्वाचनम्

गते एप्रिल्मासे ११ दिनाङ्के दक्षिणकोरियादेशे पञ्चदशं राष्ट्रियनिर्वाचनं प्रवृत्तम् । तस्मिन् निर्वाचने 'किम्'नामधेयाः त्रयः प्रमुखस्पर्धिनः आसन् । २९९ स्थानयुक्तयां संसदि शासकपक्षेण न्यूकोरियापक्षेण १३९ स्थानानि प्राप्तानि । अध्यक्षस्य किंग्डेयिंग्वर्यस्य नायकत्वेन युक्तः न्याषनल् कांग्रेस् - धर् न्यू पालिटिक्स् पक्षः ७९ स्थानानि प्राप्नोत् । किम् जांग् पिल्नायकत्वेन युक्तः युनैटेड् लिबरल् डेमाक्रटिक्पक्षः ५० स्थानानि प्राप्नोत् ।

२९९ स्थानेषु ६ स्थानानि प्रपोर्षनल्रेप्रसेण्टेषन्पद्धत्या पूरितानि । १२१ स्थानानि जितवता शासकपक्षेण प्रपोर्षनल्-रेप्रसेण्टेषन्पद्धत्या १८ स्तानानि आधिक्येन प्राप्तानि । अतः तस्य सङ्ख्याबलं १३९ सङ्ख्यात्मकं जातम् । १९९१तमे वर्षे प्रवृत्ते निर्वाचने तेन १४९ स्थानानि प्राप्तानि आसन् । एतस्मिन् निर्वाचने राष्ट्रियकांग्रेस्पक्षेण १०० स्थानानि प्राप्येरन् इति तर्कितम् आसीत् । किन्तु प्रपोर्षनल्रेप्रसेण्टेषन्पद्धत्या प्राप्तानि १३ स्थानानि अविहाय अपि तेन ७९ स्थानानि एव प्राप्तानि । अध्यक्षः किम् यंग् शान्वर्यः ११ जनानां पक्षेतराभ्यर्थिनां समर्थनं प्राप्नुयात् इति तर्क्यते । (आहत्य पक्षेतराभ्यर्थिनः १६) अतः सः पूर्णबहुमतं प्राप्य अधिकारपदे अनुवर्तेत । निर्वाचनात् सप्ताहद्वयात् पूर्वं जनैः चिन्तितम् आसीत् यत् सः किजयावकाशात् वञ्चितः भवेत् इति । तत्काले उत्तरकोरियादेशस्य आक्रमणं जातम् । एतत् आक्रमणं बहुभिः देशैः खण्डितम् । एतत्सर्वं शासकपक्षस्य आनुकूल्याय जातम् । 'यदि शतं स्थानानि प्राप्येरन् तर्हि राज्याङ्गे परिवर्तनं करिष्यते' इति राष्ट्रियकाङ्ग्रेस्पक्षेण घोषितम् आसीत् । किन्तु तेन निरीक्षितानि स्थानानि न प्राप्तानि ।

एतत् निर्वाचनम् अधिकृत्य राजकीयपण्डिताः अभिप्रायं प्रकटितवन्तः यत् अध्यक्षः किम्वर्यः अपेक्षितप्रमाणेन विजयं न साधितवान् इत्यतः तस्य शोचनीया स्थितिः भविष्यति इति । एकस्य एव जनस्य द्वितीयवारम् अध्यक्षत्वं न अनुमन्यते कोरियासंविधानम् । अतः १९९७ तमे वर्षे यत् अध्यक्षीयनिर्वाचनं प्रचलिष्यति तस्य निमित्तं स्वपक्षस्य अन्यम् अभ्यर्थिनं चेतुं किम्वर्येण पक्षशक्तिः वर्धनीया अस्ति । १९९८ पर्यन्तं तु किम् यंग्शाम्वर्यस्य अध्यक्षत्वम् अनुवर्तिष्यते एव ।

राष्ट्रियनिर्वाचनस्य समाप्तेः अनन्तरं, तन्नाम एप्रिल्मासस्य १६ दिनाङ्के, अमेरिकाध्यक्षः क्लिण्टन्वर्यः दक्षिणकोरियादेशम् आगत्य किम्यंग्शाम्वर्येण सह 'चेजूद्वीप'विषये चर्चां कृतवान् । उभौ अपि देशौ निश्चितवन्तौ यत् कोरियाद्वीपसमूहे शान्तेः स्थिरीकरणार्थं दक्षिणकोरिया, उत्तरकोरिया, चैना, अमेरिका चेति चत्वारः देशाः अपि प्रयत्नं कुर्युः इति । तौ उक्तवन्तौ यत् सुस्थिरायाः चिरकालिक्याः शान्तेः स्थापनम् एव कोरियाजनानां लक्ष्यम् अस्ति इत्यतः उभाभ्याम् अपि कोरियादेशाभ्याम् एतद्विषये प्रयत्नाः करणीयाः इति ।

पूर्वं कोरियादेशः अभिन्नः आसीत् । तादृशस्य अखण्डस्य कोरियादेशस्य निरीक्षां करोति समग्रः प्रपञ्चः ।



# श्लाघनपात्रता

रङ्गराजनामकः कश्चित् किमपि कार्यम् अकुर्वन् आलस्येन दिनानि यापयति स्म। तस्य बान्धवाः अन्ये परिचिताः च सर्वदा वदन्ति स्म यत् - रङ्गराजः यत्किमपि कार्यं कर्तुम् असमर्थः इति । तथापि रङ्गराजः तेषां वचनं गम्भीरतया न परिगणयति स्म ।

एकदा रङ्गराजस्य मातुलः सुन्दरः तस्य गृहम् आगतवान् । गृहे सर्वेऽपि रङ्गराजस्य विषये चिन्तयन्तः सन्ति इति ज्ञात्वा सः रङ्गराजं तर्जितवान् ।

तदा रङ्गराजः खेदेन पृष्टवान् - "अहं कम् अपराधं कृतवान्, येन भवान् माम् एवं तर्जयेत् ?" इति ।

"मानवः भूत्वा यः जन्म प्राप्तवान् तेन जीविकानिर्वहणार्थं यत्किञ्चित् कार्यं करणीयमेव । भवान् तावदपि न जानाति वा ? पशवः अपि उदरपूरणार्थं कमपि प्रयत्नं कुर्वन्तः भवन्ति एव । मानवः सन् अपि भवान् कमपि प्रयत्नं न करोति खलु ? किम् एतेन लज्जां न अनुभवति भवान् ?" इति पृष्टवान् सुन्दरः ।

"सम्पादनं किमर्थम् आवश्यकम् ? अशनस्य, वसनस्य, वसतेः च निमित्तं खलु सम्पादनं करणीयम् ? अशनवसनादयः अत्र विनायासं प्राप्यन्ते एव । एवं स्थिते किं सम्पादनार्थं प्रयत्नेन ?" इति रङ्गराजः पृष्टवान् ।

एतत् श्रुत्वा सुन्दरः असहनया - "मातापितरौ सर्वदा न भवतः । सहोदराः अपि सर्वदा भवतः योगक्षेमं पश्येयुः एव इत्यत्र कः विश्वासः ? यदा कस्यापि साहाय्यं न भविष्यति तदा भवान् किं करिष्यति ? स्वावलम्बि जीवनं स्यात् मानवस्य । 'उद्योगं पुरुषलक्षणम्' इति वचनं न श्रुतं वा भवता ?" इति पृष्टवान् ।

"यदि अहं कष्टेन सम्पादयेयं तर्हि चोराः तत् न अपहरेयुः इत्यत्र कः विश्वासः ? यः ज्ञानी भवति सः भाविजीवनविषये अधिकं न चिन्तयति ।

अहं ज्ञानी अस्मि । अतः भाविजीवनविषये नास्ति चिन्ता मम'' इति उक्तवान् रङ्गराजः ।

तदा सुन्दरः उक्तवान् - ''मानवरूपेण जन्म प्राप्तवता सर्वेण अपि जीवने यत्किञ्चित् साधनीयम् एव । अन्यथा जीवनस्य सार्थक्यं न भवति'' इति ।

''सार्थक्यं नाम किम् ?'' इति पृष्टवान् रङ्गराजः ।

''नाम चिरस्थायि यथा स्यात् तथा करणम् एव सार्थक्यं नाम'' इति उक्तवान् सुन्दरः ।

''एवं वा ? मम पितामहः दशवर्षेभ्यः पूर्वं दिवङ्गतः । इदानीं ग्रामे विद्यमानाः सर्वेऽपि तं विस्मृतवन्तः । मम प्रपितामहस्य नाम अपि कोऽपि न स्मरति इदानीम् । मम पितुः नाम, कालान्तरे मम नाम च जनाः स्मरेयुः एव इत्यत्र मम किञ्चिदपि विश्वासः नास्ति । अस्मिन् प्रपञ्चे शरीरम् इव नाम अपि अशाश्वतम् । यत् अशाश्वतं तस्य निमित्तं किमर्थं श्रमः कर्तव्यः ?'' इति पृष्टवान् रङ्गराजः ।

रङ्गराजस्य वचनं श्रुत्वा सुन्दरः उक्तवान् - ''पश्यतु, भवान् सम्भाषणे नितरां चतुरः । किन्तु तेन कः लाभः ? जीवितावधौ एकस्मात् वा यदि श्लाघनं न प्राप्यते तर्हि जीवनस्य सार्थकता सर्वथा न भवति एव'' इति ।

''भवान् सार्थकशब्दप्रयोगं सम्यक् कुर्वन् अस्ति । भवान् यां सार्थकताम् उक्तवान् सा मम जीवने प्राप्ता अस्ति । अस्मिन् ग्रामे प्रह्लादः नाम कश्चित् ज्येष्ठः अस्ति । सः मां यदा यदा पश्यति तदा सर्वदा मां श्लाघते एव'' इति रङ्गराजः



अभिमानेन उक्तवान् ।

''एतस्मिन् वचने अहं न विश्वसिमि'' इति उक्तवान् सुन्दरः ।

''एवं तर्हि अद्य सायं कुल्यासमीपं आगच्छतु भवान् । तत्र सर्वं भवान् स्वयं द्रक्ष्यति, श्रोष्यति च'' इति रङ्गराजः सुन्दरं सूचितवान् ।

तस्मिन् दिने सायं सुन्दरः कुल्यासमीपं गतवान् । तस्मिन् समये रङ्गराजः वृक्षस्य अधः शयानः गीतं गायन् आसीत् । तदा प्रह्लादः तेन मार्गेण आगतवान् । रङ्गराजः झटिति उत्थाय तं नमस्कृतवान् ।

''रङ्गराज, उपविशतु तावत्'' इति उक्तवान् प्रह्लादः ।

''भवादृशः ज्येष्ठः स्थितः अस्ति । एवं स्थिते अहं कथम् उपविशेयम् ?'' इति रङ्गराजः विनयेन उक्तवान् ।

तदा प्रह्लादः उक्तवान् - ''ज्येष्ठत्वेन

भवान् एव श्रेष्ठः । भवान् महाज्ञानी । भवतः स्तरं प्राप्तुं महायोगिनाम् अपि शतवर्षाणि आवश्यकानि भवन्ति । सामान्यानाम् अस्माकं मध्ये भवान् अस्ति इत्यतः जनाः भवतः मौल्यं न जानन्ति । परन्तु यदि भवान् ज्ञानिनां मध्ये स्यात् तर्हि ते सर्वे भवतः आराधनं कुर्युः । वेदान्तपठनम् अन्यत् । तस्य अर्थावगमनं च अन्यत् । भवान् वेदान्तं सम्यक् अवगतवान् अस्ति । वेदान्तचिन्तनस्य मूर्तिमत् रूपम् अस्ति भवान् । भवतः तुल्यतां प्राप्तुं मादृशैः इहजन्मनि जन्मान्तरे च निरन्तरप्रयत्नः करणीयः भवेत् । अनन्तरकाले अपि सा योग्यता प्राप्येत वा न वा इत्यत्र सन्देहः मम'' इति ।

''सर्वं भवतः कृपातः एव । अत्र मम गरिमा कोऽपि नास्ति '' इति रङ्गराजः प्रसन्नवदनः सन् उक्तवान् ।

''भवता सह वेदान्तचर्चा करणीया इति मम इच्छा अस्ति । परन्तु इदानीं मम समयः नास्ति । भगवतः अनुग्रहः यदि स्यात् तर्हि सा मम इच्छा कदाचित् वा पूर्णा भवेत्'' इति वदन् प्रह्लादः ततः गतवान् ।

तावत्पर्यन्तं कुल्यायाः समीपे वृक्षस्य पार्श्वे निलीय सम्भाषणं शृण्वन् स्थितः सुन्दरः बहिः आगत्य - ''भवान् बुद्धिमान् अस्ति । सम्यक् श्लाघनं प्राप्नुवन् च अस्ति । अत्र किं तन्त्रम् आश्रितं भवता ?'' इति कुतूहलेन रङ्गराजं पृष्टवान् ।

''अहं तस्य श्लाघनं करोमि । सः प्रतिक्रियारूपेण मम श्लाघनं करोति । तावदेव अत्र । अन्यत् किमपि नास्ति'' इति उक्तवान् रङ्गराजः ।

सुन्दरः शिरश्चालनेन एतद्विषये स्वस्य असम्मतिं प्रदर्शयन् - ''एतादृशश्लाघनस्य मौल्यं नास्ति । सर्वेषां दृष्ट्या यः श्रेष्ठः अस्ति ततः श्लाघनं प्राप्तं चेत् एव भवतः जीवनं सार्थकं भवेत्, न अन्यथा'' इति



उक्तवान् ।

तदा रङ्गराजः उक्तवान् - "प्रह्लादः कश्चन श्रेष्ठः जनः । भवान् तस्य विषये अधिकं न जानाति" इति ।

"भवन्तं श्लाघमानस्य तस्य श्रेष्ठता कीदृशी अस्ति इति मया स्वयं ज्ञायते एव । किम् अधिककथनेन ?" इति तिरस्कारेण उक्तवान् सुन्दरः ।

रङ्गराजः तद् श्रुत्वा कोपेन उक्तवान् - "मम श्लाघनं प्रह्लादः एकः एव करोति । परन्तु प्रह्लादस्य श्लाघनं ग्रामे सर्वेऽपि कुर्वन्ति । आवश्यकं चेत् त्रिचतुरान् पृच्छतु भवान्" इति ।

भागिनेयस्य वचने अविश्वस्य सुन्दरः प्रह्लादस्य विषये ग्रामे कांश्चन पृष्टवान् । कश्चित् वणिक् तस्य अर्थशास्त्रज्ञानम् इष्टवान् । अपरः पण्डितः तस्य पाण्डित्यं श्लाघितवान् । कश्चित् चित्रकारः तस्य चित्रकलाम् इष्टवान् । एतेन सुन्दरः ज्ञातवान् यत् प्रह्लादः सकलशास्त्रपारङ्गतः, सकलकलाकोविदः च इति । 'तादृशः असामान्यः जनः रङ्गराजे किं वैशिष्ट्यं दृष्टवान् स्यात् ? किमर्थं सः रङ्गराजं श्लाघते ?' इति प्रश्नः उत्पन्नः सुन्दरस्य मनसि ।

सः सुन्दरः एतं विषयं यदा रङ्गराजगृहे उक्तवान् तदा रङ्गराजस्य पिता हसन् उक्तवान् - "पुरतः विद्यमानस्य सामान्यस्य अपि श्लाघनं ज्येष्ठानां लक्षणम् । एतेन श्लाघनकर्तुः एव ज्येष्ठत्वं द्योतितं भवति, न तु रङ्गराजस्य" इति ।

तदा रङ्गराजस्य माता सुन्दरम् उक्तवती - "सहोदर, रङ्गराजस्य कश्चित् गुणं प्रह्लादः इष्टवान् स्यात् । अतः एव रङ्गराजं श्लाघते सः । अतः भवान् सर्वप्रथमं प्रह्लादसमीपं गत्वा रङ्गराजे तेन दृष्टं गुणं ज्ञात्वा आगच्छतु । तदा सर्वं सुस्पष्टं भविष्यति" इति ।





एतद्विषये सुन्दरस्य अपि कुतूहलम् आसीत् एव । अतः सः अनन्तरदिने प्रह्लादस्य समीपं गत्वा स्वपरिचयम् उक्त्वा तं श्लाघितवान् ।

प्रह्लादः महता सन्तोषेण – ''मम साहाय्यं किमपि आवश्यकं चेत वदतु । निश्चयेन करिष्यामि'' इति उक्तवान् ।

सुन्दरः अनुक्षणमेव रङ्गराजस्य विषयम् उक्त्वा – ''भवान् तस्मिन् कं गुणम् इष्टवान् ?'' इति पृष्टवान् ।

तदा प्रह्लादः आश्चर्येण – ''रङ्गराजस्य विषये अहं किमपि न जानामि । परन्तु श्लाघनं मम प्रवृत्तिः । अतः अहं तस्य श्लाघनं करोमि, तावदेव । तस्य गुणविशेषः मया कोऽपि न लक्षितः । वस्तुतः तु रङ्गराजस्य मम च विशेषात्मीयता अपि नास्ति'' इति उक्तवान् ।

''श्लाघनं भवतः प्रवृत्तिः स्यात् नाम । परन्तु अत्र पात्रापात्रविवेकः अपि भवेत् खलु । सर्वेषां श्लाघनं दोषाय न भवति वा ? भवादृशाः ज्येष्ठाः एव एवं कुर्वन्ति चेत् समाजस्य का वा गतिः स्यात् ?'' इति सुन्दरः पृष्टवान् ।

तदा प्रह्लादः हसन् उक्तवान् – ''श्लाघनं कदापि दोषाय न भवति । तेन पुरतः विद्यमानस्य लाभः एव भवति, न तु हानिः'' इति ।

''यत्किमपि कार्यं कर्तुम् अयोग्यं पुरुषं भवान् ज्ञानी इति श्लाघते चेत् तेन इतोऽपि हानिः एव भवेत् खलु'' इति पृष्टवान् सुन्दरः ।

''तथा न भवति । सर्वेषाम् अपि सङ्कोचप्रवृत्तिः अस्ति एव । अहं ज्ञानिनः श्लाघनं करोमि चेत् सः विनयेन सङ्कोचम् अनुभवति । मया प्रशंस्यमानः यदि ज्ञानी न भवति तर्हि सः श्लाघनपात्रत्वं प्राप्तुम् इतोऽपि प्रयत्नं करोति'' इति उक्तवान् प्रह्लादः ।

''भवान् यस्य श्लाघनं करोति तस्य निर्लज्जता अस्ति चेत् ...?'' इति पृष्टवान् सुन्दरः ।

''निर्लज्जस्य श्लाघनं कृतं चेत् सम्भाव्यात् अपायात् रक्षणं प्राप्यते'' इति उक्तवान् प्रह्लादः ।

''अपायात् रक्षणं कथं भवति ?'' इति पुनः पृष्टवान् सुन्दरः ।

''ते निर्लज्जाः विनाकारणं परदूषणं कुर्वन्तः भवन्ति । अहं तादृशानाम् अपि श्लाघनं करोमि इत्यतः ते मम निन्दनं कदापि न कुर्वन्ति । अतः तादृशानां निन्दनतः अहं रक्षितः भवामि । अतः एव

अहं सर्वेषां श्लाघनं करोमि । एतेन मम, अन्येषां च प्रयोजनं भवति'' इति प्रह्लादः हसन् उक्तवान् ।

सुन्दरः तस्य वचनेन आश्चर्यचकितः सन् - ''स्वामिन्, सर्वं सम्यक् एव अस्ति । परन्तु श्लाघनविषये भवान् किञ्चित् तारतम्यभावं कल्पयति चेत् वरम् । अन्यथा मम भागिनेयसदृशाः आत्मानं महाज्ञानिनं भावयेयुः । भवान् मम भागिनेयं रङ्गनाथं ज्ञानी इति श्लाघितवान् । मूर्खः स तु वस्तुस्थितिम् अजानन् इदानीम् आत्मानं वास्तविकं ज्ञानिनम् एव मन्यमानः अस्ति'' इति उक्तवान् ।

तदा प्रह्लादः उक्तवान् - ''स्वविषये यः स्वयं जानाति सः एव ज्ञानी । अन्येषां द्वारा यः जानाति सः मूर्खः एव । मम वचनेन कस्यचित् ज्ञानं न वर्धते, मूर्खत्वं न्यूनं न भवति वा'' इति ।

''तथापि श्लाघनकरणात् पूर्वम् अन्येषां योग्यतायाः अवगमनं लाभाय खलु'' इति उक्तवान् सुन्दरः ।

प्रह्लादः अनङ्गीकारपूर्वकं शिरः चालयन् - ''अन्येषां अवगमनार्थं यः समयः व्ययीक्रियते तं समयं नूतनविषयावगमनार्थं व्ययीकरोमि अहम् । कार्यानुकूलचिन्तनात् अन्यत्र कालक्षेपं कर्तुं न इच्छामि । येषां श्लाघनम् अहं अधिकतया करोमि ते अयोग्याः इत्येव निश्चितम् । अयोग्यस्य तोषणार्थं, ततः आत्मनः रक्षणार्थं च एतत् मम श्लाघनं भवति । पञ्चषैः वचनैः तेषां श्लाघनं कृत्वा अहं ततः निर्गच्छामि'' इति उक्तवान् ।

एवं सुन्दरः स्वसंशयान् निवार्य ततः गृहं प्रत्यागतवान् । प्रवृत्तं सर्वं भागिनेयं रङ्गनाथं निवेद्य - ''पश्यतु वत्स, प्रह्लादतः अहं बहून् विषयान् ज्ञातवान् अस्मि । इतः परम् अहमपि भवतः श्लाघनम् एव करोमि, न तु अधिकं वार्तालापम् । वस्तुतः भवादृशः महाज्ञानी अन्यत्र कुत्रापि नास्ति इत्येव सर्वदा वदामि'' इति उक्त्वा तस्मिन् एव दिने स्वग्रामं गतवान् ।

तदा रङ्गराजः स्वदोषं ज्ञात्वा लज्जितः अभवत् । गच्छता कालेन तस्मिन् परिवर्तनम् आगतम् । अनन्तरं सः श्लाघनप्राप्त्यर्थं प्रह्लादस्य समीपं न गतवान् एव ।



# असत्यकथनम्

ब्रह्मपुरे शङ्करनागः नाम कश्चन बालकः आसीत् । असत्यम् उक्त्वा जनान् कष्टे पातयित्वा सन्तोषम् अनुभवति स्म सः । अतः 'असत्यकथकः' इति तं निर्दिशन्ति स्म जनाः । शङ्करनागस्य बुद्धिमत्ता अपि असामान्या एव आसीत् ।

कदाचित् शङ्करनागः कुत्रापि गच्छन् आसीत् तदा पार्श्वग्रामवासी सुन्दराङ्गः मिलितवान् । सः शङ्करनागम् उक्तवान् - ''पार्श्वग्रामवासी अपि अहं भवतः विषये सर्वं श्रुतवान् अस्मि । असत्यकथनेन भवान् सर्वान् वञ्चयति इति श्रूयते । भवतः सामर्थ्यं परीक्षणीयम् इति मम इच्छा । अतः असत्यकथनेन मां वञ्चयतु तावत्'' इति ।

शङ्करनागः सुन्दराङ्गं सकृत् आपादमस्तकं दृष्ट्वा - ''आर्य, असत्यकथनं दूरे तिष्ठतु नाम, भवता सह वाक्यद्वयात्मकं सम्भाषणं कर्तुम् अपि समयः नास्ति मम । पार्श्वग्रामस्थस्य कासारस्य बन्धः भग्नः इति श्रूयते । कासारस्थं जलं समग्रं निर्गतम् अस्ति । अतः इदानीं तत्र मीनाः अञ्जलिना सङ्ग्रहणीयाः, न तु एकैकशः'' इति उक्त्वा वेगेन ततः धावितवान् ।

शङ्करनागस्य व्यवहारं दृष्टवति सुन्दराङ्गे आशा उत्पन्ना । सः अपि मीनसङ्ग्रहणेच्छया ततः धावितवान् । यदा सः कासारसमीपं गतवान् तदा जलपूर्णः कासारः दृष्टिगोचरः जातः ।

शङ्करनागस्य असत्यकथनचातुरीं दृष्ट्वा आश्चर्यम् अनुभवन् ततः निर्गतवान् सुन्दराङ्गः ।






# ११

[ट्रोय्युद्धस्य अनन्तरं स्वनगरम् इथाकां प्रति प्रस्थितः रूपधरः मध्येमार्गम् अनेकानि कष्टानि अनुभवन् अनेकवर्षात्मकस्य प्रयाणस्य अनन्तरम् अनुचरैः वियुक्तः सन् एकाकितया स्वदेशं प्राप्तवान् । किन्तु तावता अपि तस्य कष्टानि न समाप्तानि आसन् । तस्य कुलदेवता बुद्धिमतीदेवी तस्य अभ्युदयार्थम् एव तं वृद्धरूपेण परिवर्तितवती । अत्रान्तरे इथाकायां यत् प्रवृत्तं तत् पठन्तु भवन्तः ।]

ट्रोय्युद्धं समाप्य प्रत्यागताः ग्रीक्जनाः वार्तां प्रसारितवन्तः यत् रूपधरः प्रत्यागमनसमये मार्गे दिवङ्गतः इति । अतः इथाकापरिसरे समीपद्वीपेषु च वसन्तः शताधिकाः राजकुमाराः रूपधरस्य गृहस्य उपरि आक्रमणं कृतवन्तः, तत्रैव वासम् आरब्धवन्तः च । तेषु राजकुमारेषु एकैकः अपि इच्छति स्म यत् रूपधरस्य पत्नीं पद्ममुखीं परिणीय मया एव इथाकायाः आधिपत्यं प्राप्तव्यम् इति ।

रूपधरस्य पुत्रः धीरमतिः प्राप्तवयस्कः जातः आसीत् । सः यदा बालः आसीत् तदा एव रूपधरः युद्धार्थं निर्गतवान् आसीत् । अतः धीरमतिः पितुः आकारं सम्यक् न स्मरति स्म । पितुः मुखं कीदृम् इति ऊहितुम् अपि न शक्नोति स्म सः । अतः पितुः दर्शने

विशेषकुतूहलम् आसीत् तस्य । पितुः प्रत्यागमनं कातरतया प्रतीक्षमाणः आसीत् सः । पितुः आगमनवार्तां कामपि अप्राप्य नितरां खिन्नः जातः आसीत् सः । 'यदि पिता प्रत्यागच्छेत्, यदि वा पितुः मरणवार्ता अधिकृतरूपेण ज्ञायेत तर्हि वरं भवेत् । पिता प्रत्यागतः चेत् मम अम्बा तेन सह सुखेन तिष्ठेत् । तस्य मरणवार्ता यदि ज्ञायेत तर्हि अन्यं परिणेतुं वा सा अशक्ष्यत्' इति चिन्तयति स्म धीरमतिः ।

रूपधरगृहम् आगताः राजकुमाराः दर्पेण, मदेन, धाष्ट्र्येन, बलेन च धीरमतिं हतप्रभं कृत्वा तस्य गृहे एव वसन्तः तद्गृहीयपशून् एव मारयित्वा भोजोत्सवम् आचरन्तः 'पद्ममुखी माम् एव परिणेष्यति' इति परस्परं वदन्तः कलहं कुर्वन्तः दिनानि यापयन्तः आसन् । एतेषां निवारणोपायं न जानाति स्म धीरमतिः ।

पत्युः प्रत्यागमनविषये प्रबलः विश्वासः आसीत् धीरमत्याः । सा ज्योतिषिकद्वारा ज्ञातवती आसीत् यत् रूपधरः कालान्तरे प्रत्यागच्छेत् एव इति । अतः सा पुनर्विवाहं निराकृतवती आसीत् ।

किन्तु तां परिणेतुम् आगताः राजकुमाराः - 'रूपधरः प्रयाणसमये मध्येमार्गं दिवङ्गतः एव इत्यत्र नास्ति सन्देहः' इति वदन्तः तस्याः परिणयार्थं प्रयतमानाः आसन् ।

तेभ्यः आत्मनः रक्षणार्थं पद्ममुखी कदाचित् उक्तवती - ''अहं मम श्वशुरस्य शवपेटिकायाः आच्छादनार्थम् एकस्य विशिष्टवस्त्रस्य वयनं कुर्वती अस्मि । तत् वस्त्रं यदा सेत्स्यति तदा स्वयंवरपद्धत्या भवत्सु कश्चित् परिणेष्यामि'' इति । राजकुमाराः सहर्षम् एतं प्रस्तावम् अङ्गीकृतवन्तः ।

ततः आरभ्य पद्ममुखी प्रतिदिनं दिवाकाले निरन्तरं वस्त्रस्य वयनं करोति



स्म। किन्तु रात्रौ तदेव तन्तुरूपेण परिवर्तयति स्म सा।

वर्षत्रयस्य अनन्तरम् अपि यदा तस्याः वस्त्रं न सिद्धं तदा राजकुमाराः तया क्रियमाणां वञ्चनां ज्ञातवन्तः। तेन क्रुद्धाः ते स्वस्य दौर्जन्यम् अधिकीकृतवन्तः। एतत्सर्वं दृष्ट्वा नितरां खिन्नः धीरमतिः बहुधा विचिन्त्य निर्णीतवान् यत् पैलासनगरं गत्वा नवद्योतं दृष्ट्वा स्पार्टानगरं गत्वा प्रतापेन सह वार्तालापं कृत्वा वा पितुः विषये काऽपि वार्ता ज्ञातव्या एव इति।

'युद्धं गतेषु अन्तिमतया प्रत्यागतः प्रतापः। अतः सः पितुः विषये यत्किञ्चित् जानीयात् एव। यदि पितुः मरणं निश्चितरूपेण ज्ञायते तर्हि तस्य अन्त्य-क्रियां समाप्य मातुः स्वयंवरं निर्वर्तयिष्यामि। एतेषां दुष्टानां पीडा मया कथञ्चित् निवारणीया एव। यदि पिता जीवति इत्येतत् दृढीभवति तर्हि गृहं प्रत्यागत्य केनापि उपायेन एतान् सर्वान् दुष्टान् राजकुमारान् संहरिष्यामि' इति चिन्तितवान् धीरमतिः।

एवं निर्णीतवान् सः राजकुमारान् मेलयित्वा उक्तवान् - "अयि भोः मित्राणि, भवन्तः मम मातरं परिणेतुम् इच्छन्ति। तत् युक्तम् एव। किन्तु तद्व्याजेन अत्र वासं कृत्वा दौष्ट्येन व्यवहरणं, स्वच्छन्द-व्यवहारश्च नितराम् अशोभावहः। अतः अहं न्यायनिर्णयसभाम् आयोज्य सर्वेषां सम्मुखे भवतः सर्वान् निवेदयिष्यामि यत् भवद्भिः स्वगृहं प्रतिगन्तव्यम् इति। स्वगृहे स्वेच्छया व्यवहरन्तः यथेष्टं खादन्तु, पिबन्तु, विनोदं प्राप्नुवन्तु वा। किन्तु इतः परम् अत्र भवताम् उपस्थितिं स्वेच्छाव्यवहारं वा अहं न सहे। इतः प्रतिगमनं निराकृतं चेत् भवतां मरणं निश्चितम्" इति।

अनिरीक्षिततया धीरमतिना प्रदर्शिताम् एतां साहसप्रवृत्तिं दृष्ट्वा सर्वे राजकुमाराः





आश्चर्यचकिताः । अनन्तरदिने धीरमतिः उद्घोषकान् आहूय आज्ञापितवान् - ''सर्वैः न्यायनिर्णयस्थले समाविष्टैः भवितव्यम् इति वार्ता सडिण्डिमघोषं सर्वत्र प्रसारयन्तु'' इति ।

अनन्तरदिने सः शूलायुधं गृहीत्वा शुनकैः परिवृतः सन् कान्त्या प्रकाशमानः न्यायनिर्णयस्थानं गतवान् । पूर्वं रूपधरः यत्र उपविशति स्म तत्र तम् आदरेण उपवेशितवन्तः तत्रत्याः निर्णायकसभायाः ज्येष्ठाः सदस्याः ।

सर्वे यदा स्वस्वस्थाने उपविष्टवन्तः तदा ऐगुप्तः नाम वृद्धः कथनार्थम् आसनात् उत्थितवान् । तस्य पुत्रेषु कश्चित् रूपधरस्य अनुचरः आसीत् । अपरः पुत्रः पद्ममुखीं परिणेतुम् इच्छतां राजकुमाराणां गणं प्रविष्टवान् आसीत् । ऐगुप्तः एवम् उक्तवान् - ''महाजनाः ! न जाने, एषः समावेशः केन आयोजितः इति । सभाम् आयोजयता तेन युक्तम् एव आचरितम् । यतः रूपधरस्य निर्गमनस्य अनन्तरम् एतादृशी सभा न प्रवृत्ता आसीत् । अद्य अस्माकं समावेशः केन उद्देशेन आयोजितः अस्ति इति ज्ञातुम् अस्माकं सर्वेषाम् अस्ति विशेषकुतूहलम्'' इति ।

वृद्धस्य वचनात् धीरमतेः उत्साहः प्रवृद्धः । सः उत्थाय उक्तवान् - ''श्रीमन्, एषः समावेशः मया एव आयोजितः अस्ति । मम कष्टानि निवेदयितुं भवतः सर्वान् आहूतवान् अस्मि । मम गृहे उभयविधं कष्टम् अस्ति । यः भवतां सर्वेषां राजा आसीत् तेन विरहितः अस्मि इति तु एकविधं कष्टम् । अपरविधं तावत् मम मातरं परिणेतुम् आगतानां राजकुमाराणाम् अनियन्त्रितः व्यवहारः । ते मम गृहं बलात् आक्रम्य तत्रैव वासम् आरब्धवन्तः सन्ति । यदि ते इतोऽपि कानिचन दिनानि मम गृहे तिष्ठेयुः तर्हि मम सर्वनाशः निश्चितः । दौष्ट्यम् आचरत्सु अत्रत्थानां केषाञ्चित् पुत्राः अपि अन्यतमाः सन्ति । मम पितामहसमीपं गत्वा 'पद्ममुखीम् अहं परिणेतुम् इच्छामि' इति वक्तुं तेषां नास्ति धैर्यम् । अतः ते मम गृहे वसन्तः स्वेच्छया दौष्ट्यम् आचरन्तः सन्ति । पितुः अनुपस्थितेः कारणतः मम गृहं शुनकानाम् आवासः इव जातम् अस्ति । मम पित्रा कः अपराधः कृतः, येन वयम् इदानीम् एवं कष्टम् अनुभवन्तः स्मः ? मम गृहस्य एषा स्थितिः देशस्य एव अपमानाय । अतः एतद्विषये यथोचितं चिन्तयन्तु भवन्तः'' इति ।

तदा दुर्बुद्धिनामकः उत्थाय उक्तवान् - ''धीरमते, भवतः आक्षेपः सर्वथा निराधारः । दोषः भवतः मातुः एव । एवं स्थिते किम् अस्माकं निन्दनेन ? भवतः माता अस्मान् वञ्चयन्ती अस्ति । 'वस्त्रनिर्माणस्य अनन्तरं स्वयंवरपद्धत्या भवत्सु कश्चित् परिणेष्यामि' इति वचनं दत्तवती आसीत् सा - त्रिभ्यः वर्षेभ्यः पूर्वम् । किन्तु चतुर्थं वर्षं सम्प्राप्तं चेदपि तस्याः वस्त्रनिर्माणं न समाप्तम् एव । दिने यावत् निर्मितं तावत् रात्रौ पुनः सा श्लथयति चेत् कथं वा वस्त्रनिर्माणे प्रगतिः दृश्येत ? तां परिणेतुम् इच्छतां प्रतिनिधिः सन् अहं वदन् अस्मि । तां सर्वप्रथमं विवेकं बोधयतु भवान् । गृहात् तां बहिष्करोतु । इष्टतमं कञ्चित् अचिरात् परिणयतु सा । यदि तस्याः एषा वञ्चनाप्रवृत्तिः एवम् एव अनुवर्तेत तर्हि अस्मासु कोऽपि भवद्गृहात् न निर्गच्छेत् एव । स्मरतु एतत्'' इति ।

''गृहात् मातुः बहिष्कारः सर्वथा अशक्यः । अन्यच्च सा स्वपितुः सकाशात् यानि आभरणादीनि प्राप्तवती आसीत् तानि प्रतिदातुं सामर्थ्यम् अपि नास्ति मम'' इति उक्तवान् धीरमतिः ।

तदा कश्चन वृद्धः उत्थाय उक्तवान् - ''रूपधरः यदा युद्धार्थं प्रस्थितवान् तदा एव अहं भविष्यवाणीम् उक्तवान् आसं यत् एषः विंशतिवर्षाणाम् अनन्तरं प्रत्यागमिष्यति इति । मम वचनम् अद्यावधि वितथं न जातम् । रूपधरस्य प्रत्यागमनं निश्चितम् एव । तदपि अचिरात् एव भविष्यति । तस्य गृहं प्रविश्य ये स्वच्छन्दवृत्तिं प्रदर्शयन्तः सन्ति ते एतत् श्रुत्वा विवेकेन व्यवहर्तुम्



अर्हन्ति । अन्यथा तेषां घोरमरणं निश्चितम्'' इति ।

''रे वृद्ध, धिक् भवतः भविष्यवचनम् । भवतः वचनात् नास्ति भीतिः अस्माकम् अणुमात्रेण अपि । रूपधरः एव आगतः चेदपि एतस्मात् गृहात् अस्माकं निष्कासनम् असाध्यम् । अस्मासु एकैकः अपि शक्त्या असदृशः एव अस्ति । समूहबलम् अपि अस्ति अस्माकम् । एवं स्थिते अस्मान् इतः को वा निवारयितुं शक्नुयात् ? वयम् अत्र दृढमूलाः स्मः'' इति उक्तवान् कश्चन तरुणः ।

अन्ते धीरमतिः उक्तवान् - ''यत् वक्तव्यम् आसीत् तत् उक्तं मया । कृपया मह्यम् एकां नौकां विंशतिं नाविकान् च यच्छन्तु भवन्तः । ततः अहं पैलास्देशं स्पार्टां च गत्वा पितुः वार्तां ज्ञात्वा आगमिष्यामि । पिता जीवति इति वार्ता यदि

ज्ञायेत तर्हि इतोऽपि वर्षं यावत् एतेषां दुष्टानां पीडां कथञ्चित् सहिष्ये । पितुः मरणं निश्चयेन ज्ञातं चेत् तस्य उत्तरक्रियादिकं निर्वर्त्य मातुः स्वयंवरस्य व्यवस्थां करिष्यामि'' इति ।

समावेशसमाप्तेः अनन्तरं धीरमतिः न गृहं गतवान्, प्रत्युत समुद्रतीरं गतवान् । तत्र सः सहननामकं दृष्टवान् । सहनः रूपधरस्य आप्तमित्रेषु अन्यतमः । सः धीरमतिं दृष्ट्वा उक्तवान् - ''वत्स, भवतः दर्शनात् नितरां सन्तुष्टः अस्मि अहम् । पितुः योग्यः पुत्रः भवान् । मम बह्व्यः नौकाः सन्ति । तासु उत्तमां चित्वा भवते दास्यामि । भवतः प्रयाणार्थम् अर्हान् नाविकान् अहम् एव अन्विष्य भवता सह प्रेषयिष्यामि । भवान् गृहं गत्वा प्रयाणार्थं सन्नाहं कृत्वा आगच्छतु'' इति ।

धीरमतिः अनुक्षणम् एव ततः गृहं गतवान् । तं दृष्ट्वा अक्रमवासं कुर्वन्तः सर्वे राजकुमाराः तस्य समीपम् आगत्य उपहासम् आरब्धवन्तः ।

''अये, आगच्छन्तु अत्र । अस्माकं प्राणान् अपहर्तुं योजनां कृतवान् अस्ति एषः । मूषकत्वेन अस्माभिः चिन्तितः एषः इदानीं व्याघ्रायते'' इति उक्तवान् कश्चन राजकुमारः ।

''एतस्य प्रयाणस्य उद्देशः ज्ञायते वा भवद्भिः ? सैन्यम् आनेतुं गच्छन् अस्ति एषः'' इति उक्तवान् अन्यः ।

''एषः अपि समुद्रप्रयाणं कुर्वन् पिता इव मध्येमार्गम् एव मरणं प्राप्नुयात् । ततः एतस्य सम्पत्तिः अस्माकम् एव भवेत्'' इति उक्तवान् इतरः ।

''अहो हो, अस्मान् इतः निवारयितुम् अपेक्षितस्य सामर्थ्यस्य सम्पादनार्थम् एव एतस्य प्रयाणम् ! किन्तु वराकः एषः न जानाति यत् महासमूहरूपेण अपि आगताः अजाः व्याघ्रान् सम्मुखीकर्तुं न शक्नुवन्ति



इति । हुँ, इदानीम् एषः गच्छतु नाम । यावत् एतस्य प्रत्यागमनं न भविष्यति तावत् निर्विघ्नव्यवहारवन्तः भवेम वयम् । एतस्य प्रत्यागमनानन्तरं यथोचितं करिष्यामः'' इति उक्तवान् अन्यः ।

''एतस्य प्रत्यागमनं सर्वथा असम्भवम् । पित्रा आश्रितं मार्गम् अनुसरिष्यति एषः । अतः अग्रे किं करणीयम् इति चिन्तनम् एव मास्तु अस्माकम्'' इति अट्टहासपूर्वकम् उक्तवान् इतरः ।

धीरमतिः एतादृशानि वचनानि उपेक्ष्य धात्रीसमीपं गत्वा - ''मम प्रयाणार्थं सर्वविधसन्नाहं करोतु भवती'' इति आज्ञापितवान् ।

''भवता इदानीं न गन्तव्यम् । भवतः अनुपस्थितौ मातुः का गतिः भवेत् ? कथम् एषः प्रयाणविचारः इदानीम् आगतः भवतः मनसि ?'' इति पृष्टवती सा वृद्धा धात्री ।

''अम्ब, सर्वं दैवाधीनम् । दैवनिर्णयानुगुणं यत् प्रचलति तत्र विघ्नं मा आचरतु भवती । अद्य रात्रौ मम माता यदा निद्राधीना भविष्यति तदा अहम् इतः निर्गमिष्यामि । तया अनुरोधपूर्वकं पृष्टं चेदपि भवत्या मम प्रयाणवार्ता न निवेदनीया । प्रकृतं भवती मम प्रयाणार्थम् आहारादिकं सज्जीकरोतु'' इति उक्तवान् धीरमतिः ।

अत्रान्तरे सहनः सर्वत्र अटित्वा योग्यान् नाविकान् चित्वा समुद्रतीरं प्रति प्रेषितवान् । धीरमतेः प्रयाणार्थं योग्या नौका अपि तेन सज्जीकृता ।

यदा अन्धकारः प्रसृतः तदा रूपधरगृहे सर्वे आहारादिकं सेवित्वा निद्रां कृतवन्तः । तदा सहनः धीरमतिसमीपम् आगत्य - ''वत्सः, प्रयाणार्थं सर्वं सन्नद्धम् अस्ति । भवतः आगमनम् एव प्रतीक्षमाणाः स्मः वयम्'' इति सूचितवान् ।

ततः उभौ अपि समुद्रतीरं गतवन्तौ । नाविकाः प्रयाणवस्तूनि नौकायां स्थापितवन्तः । धीरमतिः नौकाम् आरूढवान् । नाविकाः नौकीलकम् अपनीय नौकाचालनम् आरब्धवन्तः । वायुः अनुकूलकरः आसीत् । अतः पैलासृदेशं प्रति तेषां प्रयाणं विना विघ्नम् आरब्धम् ।

- (अनुवर्तते)



# र स वा र्ताः

## लघुतो लघुः

लोकसभानिर्वाचनं सद्यःकाले प्रवृत्तम्। तत्काले एव केषुचित् राज्येषु राज्यसभानिर्वाचनम् अपि प्रवृत्तम्। अन्यप्रदेशेषु इव जम्मुकाश्मीरराज्ये अपि निर्वाचनं प्रवृत्तम्। तस्मिन् एव राज्ये 'अतिलघुमतकेन्द्रम्' अस्ति। लडक् जनपदस्य हान्फालाग्रामवासिनां नवजनानां निमित्तम् एव एकं मतदानकेन्द्रं व्यवस्थापितम् आसीत्। स च ग्रामः समुद्रस्तरात् ५,००० पादमिते उन्नते स्थले अस्ति।

प्रपञ्चस्तरे अत्यधिकजनसङ्ख्यायुक्तत्वेन ख्यातस्य चीनादेशस्य अङ्गभूते टिबेट्राज्ये कस्मिंश्चित् ग्रामे त्रयः एव जनाः निवसन्ति। टिबेट्राजधानीतः (लासातः) आग्नेयदिशि ५५० कि.मी. दूरे युमेन्-नामके ग्रामे ७२ वर्षीयः वृद्धः पुत्रीभ्यां सह निवसति। एतावत्पर्यन्तं सः वृद्धः एव ग्रामप्रमुखः आसीत्। इदानीं तस्य पुत्री तत् पदम् अलङ्कृतवती अस्ति।

## अत्युन्नतं भवनम्

मलेशियादेशे कौलालम्पुरनगरे अत्युन्नतं भवनं निर्मीयमाणम् अस्ति। 'पेट्रोनास् टवर्स्' इति तस्य भवनस्य नाम। यदा तस्य निर्माणं पूर्णतां गमिष्यति तदा तस्य औन्नत्यं ४४५ मीटर्-परिमितं भविष्यति। भवनस्य उपरि यत् टि.वि. एण्टिना भवति तस्य औन्नत्यम् अपि अविहाय अत्र गणना कृता अस्ति। अमेरिकादेशस्य चिकागोनगरे स्थितस्य 'सेयर्स्टवर्स्'नामकस्य भवनस्य औन्नत्यं तावत् ४३५ मीटर्परिमितम्।

## अतिविशालं स्थानकम्

चीनादेशस्य अपरं वैशिष्ट्यं नाम एशियाखण्डस्तरे अतिविशालं रेल्वेस्थानकं बीजिङ्गनगरे अस्ति। अत्र युगपत् ६०-९० रेलूयानानि गमनागमनं कर्तुम् अर्हन्ति। प्रतिदिनं ६,००,००० जनाः सञ्चारार्थम् एतस्य उपयोगं कुर्युः इति निरीक्ष्यते। जनवरीमासे तृतीये दिनाङ्के प्रवृत्ते एतस्य उद्घाटनसमारम्भे प्रधानमन्त्री लीपेङ्गवर्यः अध्यक्षपदम् अलङ्कृतवान् आसीत्। मान् टी तुङ्गवर्यः ध्वजचालनेन स्थानकस्य उद्घाटनं कृतवान्। एतस्य स्थानकस्य निर्माणार्थं २०,००० कर्मकाराः त्रीणि वर्षाणि यावत् परिश्रमं कृतवन्तः आसन्।

एशियाखण्डस्य देशेषु अन्यतमस्य थायूल्याण्ड्देशस्य राजधान्यां बाङ्काक्नगरे सुमहत् उपाहारगृहम् अस्ति। 'गृह'शब्दः अत्र नाममात्रेण अस्ति, यतः एतस्य वैशाल्यं ३३८ एकर्परिमितम्। 'रायल्ड्रागन्'नामके एतस्मिन् उपाहारमन्दिरे २०० कर्मकराः कार्यं कुर्वन्ति। ५४० आहारवितारकाः ३२५-ज्येष्ठ-पाचकाः च अत्र सन्ति। आहारवितारकाः सचक्रपादाः सन्तः सञ्चरन्ति। ५,००० जनाः अत्र युगपत् उपविश्य आहारसेवनं कर्तुम् अर्हन्ति। सर्वदा जनसम्मर्दः भवति अत्र। प्रतिघण्टम् अत्र ३,००० पाकाः सज्जीक्रियन्ते। आहारसेवनार्थम् अत्र विशालानि भवनानि भवन्ति।




# अप्रियविवाहफलम्

दृढचित्तः त्रिविक्रमः पुनः अपि वृक्षस्य समीपम् आगतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोपितवान् । ततः अधः आगत्य पुनः अपि यथापूर्वं मौनं श्मशानं प्रति प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवतः दृढचित्ततां पश्यामि चेत् भासते यत् स्वीकृतकार्यस्य समाप्तिपर्यन्तं श्मशाने एव भवान् जीवनं यापयेत् इति । किन्तु किम् एतादृशेन जीवनेन ? स्वहितम् अपि उपेक्ष्य अन्येषाम् अहितं कुर्वाणाः दुष्टाः अपि भवन्ति लोके । एतादृशान् दृष्ट्वा एव केनचित् सुभाषितकारेण उक्तम् अस्ति - 'ये स्वहितम् अपि नाशयन्तः परेषाम् अहितम् एव कुर्वन्ति ते मानुषराक्षसेभ्यः अपि अधमाः । तान् निर्देष्टुं कोऽपि शब्दः एव नास्ति लोके' इति । तादृशजनैः भवान् वञ्चितः भूत्वा कष्टानि सहमानः स्यात् वा इति मम मनसि संशयः उत्पन्नः अस्ति । यदि मम ऊहा वास्तविकी तर्हि इदानीम् एव स्वस्य कार्यं त्यक्त्वा

## वेतालकथा



स्वराज्यं गत्वा सुखेन जीवनं वरं भवेत् । यतः दुष्टबुद्धयः कदापि परिवर्तिताः न भवन्ति । ततः दूरे स्थितिः एव योग्यः मार्गः । अत्र उदाहरणरूपेण अहं चक्रधर-नामकस्य दुष्टबुद्धेः कथां श्रावयामि । श्रद्धया शृणोतु तावत्, येन विवेकप्राप्तिः, मार्गायासपरिहारश्च भवतः भवेत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

''कस्मिंश्चित् ग्रामे पूर्वं चक्रधरनामकः कश्चित् युवकः आसीत् । तस्य बान्धवः कोऽपि न आसीत् । सः कष्टेन कार्यं कुर्वन् एकस्मिन् लघुगृहे वासं करोति स्म । यदा यदा समयः प्राप्यते तदा तदा सः ग्रामपण्डितानां समीपं गत्वा किञ्चित् शास्त्रज्ञानं सम्पादयति स्म । एवं निरन्तर-प्रयत्नं कुर्वन् सः शास्त्रनिपुणः जातः ।

तस्मिन् ग्रामे एव सुशीलानामिका युवतिः आसीत् । एकदा सा विचित्रम् एकं स्वप्नं दृष्टवती । तत्र कश्चित् संन्यासी तया दृष्टः । सः संन्यासी सुशीलाम् उक्तवान् – ''योग्येन वरेण सह भवत्याः विवाहः भविष्यति चेत् भवती जीवने प्रभूतं सुखम् अनुभविष्यति'' इति ।

''योग्यः वरः कः इति अहं कथं ज्ञातुं शक्नोमि ?'' इति सुशीला संन्यासिनं पृष्टवती ।

''आकाशे कति नक्षत्राणि सन्ति इति भवती यदा पृच्छति तदा 'आवां विवाहानन्तरं मिलित्वा गणनां कृत्वा नक्षत्राणि कति सन्ति इति जानीयाम' इति यः वदति सः एव योग्यः वरः इति जानातु भवती'' इति संन्यासी उक्तवान् ।

जागरणानन्तरं सुशीला स्वप्नं स्मृत्वा आश्चर्यचकिता अभवत् । गृहे एतं विचारं यं कमपि न उक्तवती सा ।

एकदा मध्याह्ने सुशीला सखीभिः सह उद्यानं गतवती । तत्र सर्वाः नेत्रबन्धक्रीडां क्रीडन्त्यः आसन् । तदा सुशीला एकस्य वृक्षस्य पार्श्वे निलीय स्थातुं गतवती । तत्र स्थितः कश्चन सर्पः प्रमादवशात् तया पादेन स्पृष्टः । तदा सः सर्पः फूत्कुर्वन् फणाम् उन्नीय दंष्टुम् उद्युक्तः ।

तस्मिन् समये एव कश्चित् युवकः अनिरीक्षितरूपेण तत्र आगत्य तस्याः हस्तम् आकृष्य तां दूरं नीतवान् । सर्पः वेगेन ततः निर्गतवान् ।

तदा आश्चर्येण सुशीला हस्तं गृहीतवन्तं दृष्टवती । सः एव चक्रधरः आसीत् । चक्रधरः सुशीलायाः सौन्दर्यम् एव पश्यन् मन्त्रमुग्धः जातः । सुशीला अपि चक्रधरस्य विषयम् इतः पूर्वं एव श्रुतवती आसीत् ।

परन्तु तं समीपतः इदम्प्रथमतया पश्यन्ती आसीत् सा ।

सा चक्रधरम् उक्तवती - "भवान् मम प्राणान् रक्षितवान् । अतः कृतज्ञा अस्मि अहम्" इति ।

"जीवरक्षणार्थमेव भवतीम् अहं स्पृष्टवान् । किन्तु ततः परमानन्दः प्राप्तः अस्ति मया । अतः मया एव कृतज्ञता समर्पणीया भवत्यै" इति चक्रधरः हसन् उक्तवान् ।

चक्रधरेण तादृशचातुर्येण उक्तं वचनं श्रुत्वा सुशीला चिन्तितवती यत् - 'एषः एव मम योग्यः वरः स्यात्' इति ।

अतः अनुक्षणमेव सा चक्रधरं पृष्टवती - "भवतः कथनशैलीतः भाति यत् भवान् निश्चयेन अतीव चतुरः इति । तर्हि वदतु तावत् - आकाशे कति नक्षत्राणि सन्ति ?" इति ।

"वक्तुं शक्नोमि । परन्तु भवती कोपं कुर्यात् इति मम भयम्" इति चक्रधरः उक्तवान् ।

"कोपं न करोमि । वदतु भवान्" इति सुशीला उक्तवती ।

"बहूनि वर्षाणि यावत् महता कष्टेन नक्षत्राणां गणनां कृतवान् अहम् । गणनायाः समाप्तेः अनन्तरम् अपि एकं द्वयं वा मया न गणितं स्यात् इति मम संशयः आगतः । पुनः गणनां कर्तुं मम सामर्थ्यं नास्ति । यथा नक्षत्रगणनायां मम आसक्तिः अस्ति तथा कस्याश्चित् कन्यायाः अपि यदि आसक्तिः स्यात् तर्हि तादृशी एव परिणेतव्या इति मम इच्छा । भवती यदि तादृशी कन्या स्यात् तर्हि आवाभ्यां मिलित्वा नक्षत्रगणनां कर्तुं



शक्यते" इति चक्रधरः उक्तवान् ।

तत् उत्तरं श्रुत्वा - 'एषः एव मम योग्यः वरः' इति ज्ञातवती सुशीला लज्जया ततः धावितवती ।

यदा सा गृहं प्राप्तवती तदा गृहे शशिकान्तनामकः युवकः आसीत् । सः सुशीलायाम् अनुरक्तः आसीत् । विवाहनिमित्तं सः सुशीलायाः पित्रे सहस्त्रं सुवर्णनाणकानि दातुं सिद्धः आसीत् । एतं प्रस्तावं सुशीलायाः पिता अङ्गीकृतवान् आसीत् अपि ।

किञ्चित्समयानन्तरं शशिकान्तः ततः निर्गतः । तस्य गमनस्य अनन्तरं सुशीला मातुः समीपं गत्वा स्वस्वप्नविचारं मातरम् उक्तवती । 'अहं चक्रधरमेव परिणेष्यामि' इति दृढस्वरेण उक्तवती च ।

माता एतं विषयं सुशीलायाः पितरं सूचितवती । तत् श्रुत्वा पिता पुत्रीम्



उक्तवान् - ''स्वप्नविषयः साकारः भवेत् एव इति वक्तुं न शक्यते । चक्रधरः सुन्दरः अस्ति इति कारणतः भवती तम् इच्छति । किन्तु सौन्दर्यमात्रं दृष्ट्वा निर्धनाय तस्मै चक्रधराय अहं भवतीं दातुं सर्वथा न सिद्धः'' इति ।

पितुः स्वभावं सम्यक् जानती सुशीला पितरम् उक्तवती - ''मम स्वप्नः अवितथः इति निरूपयितुं किञ्चित् कालावकाशं ददातु । वर्षं यावत् मम विवाहं व्याक्षिपतु । तावति काले चक्रधरः, शशिकान्तस्य समीपे यावत् धनम् अस्ति ततोऽपि अधिकं धनं सम्पादयिष्यति चेत् एव तेन सह मम विवाहं कारयतु'' इति ।

तदा सुशीलायाः पिता उच्चैः हसन् - ''वर्षाभ्यन्तरे चक्रधरः लक्षं सुवर्णनाणकानि सम्पादयेत् वा ? इदानीम् एव शशिकान्तः लक्षाधीशः अस्ति इति भवती न जानाति वा ? लक्षसुवर्णनाणकानां सम्पादने कियान् क्लेशः अस्ति इति प्रायः भवती न जानाति । अतः वदन्ती अस्ति यत् चक्रधरः वर्षाभ्यन्तरे लक्षं सुवर्णनाणकानि सम्पादयिष्यति इति । किन्तु मम लोकानुभवः वदति यत् चक्रधरः वर्षाभ्यन्तरे तावत् धनं सम्पादयितुं न शक्नोति इति'' इति उक्तवान् ।

''वरत्वं प्राप्तुं चक्रधरस्य योग्यता अस्ति चेत् सः निश्चयेन तावत् धनं सम्पादयिष्यति'' इति विश्वासेन उक्तवती सुशीला ।

तदा तस्याः पिता 'अस्तु' इति अङ्गीकारं सूचितवान् ।

सुशीला चक्रधरं सर्वं विषयं सूचितवती । चक्रधरस्य मनसि अपि 'सुशीला परिणेतव्या' इति दृढसङ्कल्पः आसीत् । अतः सः धनं सम्पादनीयम् एव इति निश्चित्य ग्रामं त्यक्त्वा नगरं गतवान् । तत्र भिन्न-भिन्न-कार्याणि कृतवान् सः । मासः अतीतः चेदपि एकशतं रूप्यकाणि अपि न सङ्गृहीतानि चक्रधरेण । लक्षरूप्यकसम्पादनं मया असाध्यम् इति चिन्तयतः तस्य निराशा जाता ।

अत्रान्तरे कश्चित् संन्यासिनम् अपायात् रक्षितवान् चक्रधरः । तेन सन्तुष्टः संन्यासी चक्रधरस्य मुखात् तदीयं जीवनविवरणं सर्वं ज्ञात्वा पृष्टवान् - ''वत्स ! अल्पकाले प्रभूतस्य धनस्य सम्पादनार्थम् एकः एव मार्गः अस्ति । परन्तु सः कष्टकरः मार्गः । तेन मार्गेण कार्यं साधनीयं चेत् महत् साहसं करणीयं भवेत् । भवान् तादृशं साहसं कुर्यात् वा ?'' इति ।

"तस्मिन् प्रयत्ने मम जीवहानिः भवति चेदपि चिन्ता नास्ति । सर्वं कर्तुम् अहं सिद्धः अस्मि" इति चक्रधरः विश्वासयुक्तेन स्वरेण उक्तवान् ।

"नगरात् किञ्चिद्दूरे किञ्चन अरण्यम् अस्ति । तस्मिन् अरण्ये एका गुहा अस्ति । तस्यां गुहायां निधिः अस्ति । परन्तु तं निधिं कश्चित् राक्षसः रक्षन् भवति । अतः ततः निधेः स्वीकरणे महान् क्लेशः अस्ति । यदि भवतः सामर्थ्यम् अस्ति तर्हि तं गुहास्थं निधिं प्राप्तुं प्रयत्नं करोतु । दैवानुग्रहः अस्ति चेत् भवान् निधिं प्राप्नुयात् । अन्यथा राक्षसस्य आहारः भवेत्" इति संन्यासी उक्तवान् ।

संन्यासिना उक्तं विवरणं ज्ञात्वा चक्रधरः ततः प्रस्थाय अरण्यं गतवान् । तत्र किञ्चित्कालम् अन्विष्य सः निधेः गुहां प्राप्तवान् । गुहायाः पुरतः महापर्वतः इव स्थितः कश्चन राक्षसः निद्रां कुर्वन् आसीत् । चक्रधरः विनाशब्दं गुहायाः समीपं गतवान् ।

तावति काले एव राक्षसः उत्थाय चक्रधरस्य हस्तं गृहीत्वा - "मां वञ्चयितुं प्रयत्नं करोति वा भवान् ? मयि अत्र उपस्थिते, मां धिक्कृत्य गुहां प्रविशन् अस्ति खलु भवान् ? कियत् धैर्यं भवतः ? कः भवान् ? किं प्राणाः भवतः प्रियाः न सन्ति ?" इति क्रोधेन पृष्टवान् ।

तदा चक्रधरः धैर्येण अग्रे गत्वा राक्षसं स्वकथां विवृतवान् ।

"सः संन्यासी भवन्तम् अत्र प्रेषितवान् वा ? तर्हि भवतु तावत्" इति वदन् तृप्त्या शिरः चालयन् राक्षसः स्वकथां चक्रधरं



श्रावितवान् - "पूर्वजन्मनि सुशीला मम पुत्री आसीत् । तस्याः विरोधम् उपेक्ष्य अहं तस्याः विवाहं निर्वर्तितवान् । एतेन नितरां खिन्ना सा आत्महत्यां कृतवती । तेन कारणेन अस्मिन् जन्मनि राक्षसरूपेण जन्म प्राप्तवान् अस्मि । 'सुशीला एतं विवाहं सर्वथा न इच्छति' इति जानन् अपि सुशीलां परिणीतवान् इति कारणतः सुशीलायाः पतिः संन्यासी सन् जन्म प्राप्तवान् । आवयोः उभयोः अपि पूर्वजन्मनः ज्ञानम् अस्ति । पूर्वजन्मनि कृतस्य पापस्य परिहारार्थम् एतस्मिन् जन्मनि आवां प्रयत्नं कुर्वन्तौ स्वः । अतः एव संन्यासी सुशीलायाः स्वप्ने आगत्य भवति तस्याः अनुरागम् उत्पादितवान् । गतजन्मनि सुशीला यम् इष्टवती आसीत् सः एव अस्ति भवान्" इति ।

राक्षसात् एतत् सर्वं श्रुत्वा अतीव



सन्तुष्टः चक्रधरः पृष्टवान् - ''एवं तर्हि भवान् मम साहाय्यं करोति एव किल ?'' इति ।

''निश्चयेन साहाय्यं करिष्यामि । परन्तु भवता अपि मम एकः उपकारः करणीयः'' इति चक्रधरं राक्षसः उक्तवान् ।

''अल्पसामर्थ्यवान् मानवः अस्मि अहम् । भवान् तु महाबलशाली अस्ति । एवं स्थिते अहं भवादृशस्य कं वा उपकारं कर्तुं शक्नुयाम् ?'' इति आश्चर्येण राक्षसं पृष्टवान् चक्रधरः ।

''शृणोतु ! अहं भवते द्विलक्षरूप्यकाणि दास्यामि । ततः भवतः सुशीलायाः च विवाहः भविष्यति । किन्तु वर्षाभ्यन्तरे पुनः अन्यत्र परस्परविवाहम् अनिच्छतोः वधूवरयोः विवाहः निर्वर्तनीयः भवता'' इति सूचितवान् राक्षसः ।

तदा चक्रधरः महत् आश्चर्यम् अनुभवन् पृष्टवान् - ''तेन भवतः कः लाभः भविष्यति ?'' इति ।

राक्षसः क्षणकालस्य मौनस्य अनन्तरम् उक्तवान् - ''अस्यां गुहायां अक्षयनिधिः अस्ति । इतः यावत् धनं स्वीक्रियते तावत् पुनः उत्पद्यते । अतः अहर्निशम् एतस्य रक्षणं करणीयम् । एतस्मिन् जन्मनि शशिकान्तेन सह सुशीलायाः विवाहं तस्याः पिता यदि अकारयिष्यत् तर्हि पुत्र्या अनिष्टं विवाहं सः कारितवान् भवति इत्यतः तेन अग्रिमजन्मनि राक्षसजन्म प्राप्तम् अभविष्यत् । तदा एतस्मात् जन्मनः मम विमुक्तिः अभविष्यत् । तथैव शशिकान्तः संन्यासिजन्म प्राप्स्यत् अपि । इदानीम् आवयोः द्वयोः अपि विमुक्तिः नास्ति'' इति ।

तदा चक्रधरः संशयेन पृष्टवान् - ''अनिष्टः विवाहः कुत्रापि न भविष्यति चेत् ....?'' इति ।

तस्य प्रश्नं श्रुत्वा राक्षसः उच्चैः हसन् - ''मूर्ख ! लोके अनिष्टाः विवाहाः अधिकाः भवन्ति एव । अन्यच्च भवतः सुशीलायाः च विवाहः भविष्यति एव इति कारणतः मम, संन्यासिनः च विमुक्तिकालः सन्निहितः इत्येव अर्थः । यतः कृतस्य उपकारस्य प्रत्युपकाररूपेण भवान्, विवाहम् अनिच्छतोः कयोश्चित् वधूवरयोः विवाहं निर्वर्तयेत् एव खलु ? परस्परम् अनिच्छतोः वधूवरयोः विवाहस्य व्यवस्थापनं खेदाय स्यात् कदाचित् । तथापि आवयोः मोक्षार्थं भवता एतादृशस्य विवाहस्य व्यवस्थापनम् अङ्गीकरणीयम् एव'' इति उक्तवान् ।

''तथा एव भवतु । अहं प्रयत्नं

करिष्यामि'' इति उक्तवान् चक्रधरः ।

''अस्तु । भवान् तथा एवं करोतु । प्रथमं भवान् इतः गृहं गच्छतु । भवतः गृहे द्विलक्षरूप्यकाणि भवन्ति । भवान् सुशीलां परिणीय सुखेन जीवतु । परन्तु मम वचनं मा कदापि विस्मरतु'' इति उक्तवान् राक्षसः ।

अनन्तरं राक्षसस्य वचनानुसारम् एव कार्याणि प्रवृत्तानि ।

सुशीला-चक्रधरयोः विवाहस्य अनन्तरं षण्मासाभ्यन्तरे वसुदत्तनामकः कश्चित् चक्रधरस्य गृहम् आगत्य चक्रधरं पृष्टवान् - ''मम पुत्री निर्गतिकं कञ्चित् परिणेतुम् इच्छति । परन्तु अहम् एतं विवाहं सर्वथा न इच्छामि । पूर्वं भवान् अपि निर्धनः आसीत् खलु । इदानीं भवान् यथा धनवान् अस्ति तथा मम पुत्र्या इष्टः वरः अपि धनवान् भवतु इति मम इच्छा । तदर्थं कृपया मार्गं दर्शयतु'' इति ।

''धनसम्पादनमार्गः भवता न प्रष्टव्यः । भवतः पुत्र्या इष्टः वरः तं मार्गं मां पृच्छेत्'' इति चक्रधरः उक्तवान् ।

''सः वरः यत्किमपि अङ्गीकर्तुं सिद्धः नास्ति । 'धनसम्पादने मम तात्पर्यं सर्वथा नास्ति । इदानीं मम यादृशं जीवनम् अस्ति तदेव मम इष्टतमम् । तत्र परिवर्तनम् अहं न इच्छामि' इति वदति सः । अतः सः धनसम्पादनमार्गं प्रष्टुं भवत्समीपम् आगन्तुं न अर्हति'' इति उक्तवान् वसुदत्तः ।

''भवतः पुत्री किं वदति ?'' इति पृष्टवान् चक्रधरः ।

''सा अपि 'धनम् एव न इच्छामि' इति वदन्ती अस्ति । निर्धनम् एव अहं परिणेष्यामि इति तस्याः सङ्कल्पः'' इति वसुदत्तः उक्तवान् ।

चक्रधरः किञ्चित्कालं चिन्तयित्वा - ''तस्याः वयः न्यूनम् अस्ति । बुद्धिमत्ता अपि न्यूना । सर्वे जनाः काञ्चनमाश्रयन्ति इति वचनं न जानाति सा । भवतः पुत्र्याः



वचनं भवान् मा अङ्गीकरोतु । तस्मै निर्धनाय भवतः पुत्रीं मा ददातु । धनस्य कारणेन एव अहं सुशीलया सह सुखेन अस्मि । धनं विना जीवनं नितरां कष्टकरं स्यात् । अतः निर्धनाय पुत्र्याः दानं सर्वथा मास्तु । कश्चित् धनिककुलीयं वरम् अन्विष्य तस्मै तां ददातु । एतेन किञ्चित्कालं तस्याः मनसि खेदः तिष्ठेत् । किन्तु कालः एव सर्वविधखेदान् अपि विस्मारयति । अतः एतं विवाहप्रस्तावं निराकृत्य भवान् धनिकवराय एव पुत्रीं ददातु'' इति उक्तवान् ।

एतत् श्रुत्वा वसुदत्तः सन्तोषेण ततः निर्गतवान् ।

वेतालः एतां कथां समाप्य अवदत् - ''हे राजन् ! चक्रधरः वसुदत्तं यत् उक्तवान् तत् किम् उचितम् ? अनिष्टः विवाहः क्रियते इति कारणतः वसुदत्तस्य पुत्री आत्महत्यां कुर्यात् । येन स्वहितं तु न सिद्ध्यति, अन्येषाम् अहितम् एव भवति, तादृशीं सूचनां किमर्थम् दत्तवान् चक्रधरः ? एतादृशसंशयानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति अवदत् ।

तदा त्रिविक्रमः उक्तवान् - ''येन राक्षसेन चक्रधरस्य उपकारः कृतः तस्य प्रत्युपकारकरणं चक्रधरस्य कर्तव्यम् । 'भवतः उपकारं करोमि' इति चक्रधरः राक्षसाय वचनं दत्तवान् आसीत् अपि । दत्तं वचनं पालनीयम् एव खलु ! तथा अकरणं पापस्य कारणं भवति । अतः चक्रधरः वसुदत्तं सूचितवान् यत् निर्धनाय पुत्र्याः दानं मास्तु इति । 'एवं तर्हि राक्षसत्वं प्राप्स्यतः वसुदत्तस्य का गतिः ?' इति तु चिन्तनीयं नास्ति । अप्रियं विवाहं निर्वर्तयन्तः मातापितरः लोके अवश्यं भवन्ति एव । अतः तादृशाः राक्षसत्वं प्राप्य वसुदत्तं तस्मात् स्थानात् मोक्षयिष्यन्ति एव । अतः चक्रधरः वसुदत्तस्य राक्षसत्वप्राप्तिं, तत्पुत्र्याः आत्महत्यासम्भावनां च जानन् अपि उक्तवान् यत् धनिककुलीयाय एव पुत्रीं ददातु इति । युक्तम् एव आचरितं तेन'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# गोवा

Terekhol
Panaji
GOA
Polem

रचना - मीरा नायर् ◆ चित्रम् - गौतमसेनः

'परशुरामः दुष्टान् राज्ञः यथायोग्यं दण्डयित्वा तपः आचरितुं शान्तं परिसरम् अपेक्षमाणः बाणप्रयोगं कृतवान् । स च बाणः पश्चिमसमुद्रे अपतत् । यत्र बाणः पतितः तत् स्थलं जलरहितं जातम् । भूभागः तत्र दृष्टिगोचरः जातः । सः प्रदेशः एव 'गोवा'पदेन निर्दिश्यते' इति पुराणकथातः ज्ञायते । 'गोवापुरम् इति नामान्तरेण निर्दिश्यमानः गोवाप्रदेशः तृतीये क्रिस्ताब्दे (क्रि.श. ३) एव अरबवाणिज्यकेन्द्रम् आसीत्' इति उत्खतनद्वारा ज्ञायते । क्रि.श. १५ यावत् बहवः हिन्दुराजाः एतं प्रदेशं परिपालितवन्तः । १५ शतके एषः प्रदेशः आदिलशाहीवंशस्थापकस्य आदिलशाहस्य अधीनः जातः । १५१० तमे वर्षे पोर्चुगीस्जनाः एतं प्रदेशं स्वायत्तीकृतवन्तः १९६१ तमे वर्षे एषः संयुक्तभारतदेशे विलीनः जातः । तावत्पर्यन्तं, तन्नाम ४५१ वर्षाणि यावत्, एषः प्रदेशः पोर्चुगीस्जनानाम् अधीनः आसीत् ।



अल्फन्सो डि अल्बुकर्क्

गोवाप्रदेशः १०५ कि.मी. दीर्घेण समुद्रतीरेण युक्तः अस्ति । टेरिखोल्तः पोलेम्पर्यन्तं लघु-शिलाभिः सामान्यगर्तैः च युक्ता सिकतामयी भूमिः दृष्टिगोचरा भवति । समुद्रभागतः सम्भाव्यमानात् अपायात् आत्मनः रक्षणार्थं पोर्चुगीस्जनैः तत्र तत्र दुर्गाणि निर्मितानि आसन् । तेषु दुर्गेषु अग्वाडादुर्गं मनोहरम् अस्ति । 'अगुवा' नाम जलम् इत्यर्थः । एतस्य दुर्गस्य अन्तः मधुरजलीयाः उत्साः सन्ति । हिन्दुमहासागरमार्गेण माण्डोवीनदीमुखं गच्छन्तीनां नौकानां कृते एतत् दुर्गं विश्रान्तिस्थानम् अस्ति । उत्सद्वारा एव अत्र पानजलस्य व्यवस्था कृता दृश्यते । अग्वाडा रिज्मेगोस् इत्यादीनि दुर्गाणि पोर्चुगीस्शासनकाले यथा तथैव इदानीम् अपि कारागाराणि इव एव दृश्यन्ते ।



अग्वाडादुर्गम्

दुर्गाणां मध्ये सुप्रसिद्धः 'गोल्डन्बीचस्' नामकानि समुद्रतीराणि सन्ति । हिर्माल्, चपोरा वेगेटर्, अञ्जून्, बागा, कालंग्यूट् गास्पर डयास्, डोनापोला इत्येतानि तीराणि उत्तरगोवाप्रदेशे प्रसिद्धानि सन्ति । द्वारतोरणाकारेण (अर्च्) स्थितं कालंग्यूटतीरं तावत् 'समुद्रतीराणां राज्ञी' इति प्रसिद्धम् अस्ति । अत्र विहारार्थं प्रतिदिनं बहवः जनाः आगच्छन्ति । इतः दक्षिणदिशि 'डोनापौला' नामकं तीरम् अस्ति । पूर्वम् एतत्प्रदेशे यः वैस्रायपदम् अलङ्कृतवान् आसीत् तस्य पुत्र्याः नाम्ना एतत् प्रसिद्धम् अस्ति । आत्मना इष्टस्य धीवरकुलोत्पन्नस्य युवकस्य परिणये मातापितरौ असम्मतिं प्रदर्शितवन्तः इत्यतः डोनापौला एतत्प्रदेशे आत्महत्यां कृतवती । अतः एव एतत् तीरं तस्याः एव नाम्ना प्रसिद्धं जातम् ।



डोना पौलाभूप्रदेशः

कालंग्यूट्तः उत्तरदिशि बागाबीच्-शिखरस्य उपरि प्रशान्तं 'रिट्रीट् हौस्' अस्ति । एतस्य लघुक्रैस्तमन्दिरस्य मार्गे उन्नतिमार्ग-सूचकानि बहूनि दृश्यानि चित्रितानि सन्ति ।

पणजीतः नव कि.मी. दूरे स्थितं 'प्राचीनगोवा' १६ शतके गोवाराज्यस्य राजधानी आसीत् । तत्काले एतत् नगरं लिस्टन्-नगरम् इव



सेकेथड्रल्



सेण्ट् फ्रान्सिस् जेवियर्

विराजते स्म । नौकास्थानकसमीपे गोवाराज्यस्य सिंहद्वारभूतं वैसराय्तोरणम् अस्ति । अधिकारस्वीकरणात् पूर्वं वैसराय्वर्येण एतेन तोरणमार्गेण एव गन्तव्यं भवति स्म । युरोपतः भारतं प्रति आगमनार्थं मार्गम् अन्विष्टवतः वास्कोडिगामावर्यस्य स्मरणार्थम् एतत् द्वारतोरणं निर्मितम् अस्ति । तोरणस्य अपरपार्श्वे सेण्ट्काजे टौन् चर्च् अस्ति, यच्च रोम्नगरस्थेन सेण्ट् पीटर्स्-बासिलिकाभवनस्य सादृश्यं भजते ।



बोम् जेसस् बासिलिका

सेण्ट् काजे चर्च् पुरतः एशियाखण्डे एव अतिप्राचीनं महाक्रैस्तमन्दिरेषु अन्यतम 'सेकेथड्रल्' अस्ति । अत्र मृदुघण्टावादनेन ख्याता 'सिनोडो औरो'नामिका सुवर्णघण्टा अस्ति । इतः अनतिदूरे 'सेण्ट् फ्रान्सिस्जेवियर् चर्च्' इति, बोम् जेसस्-बासिलिका इति च ख्यातं क्रैस्तमन्दिरम् अस्ति । सेण्ट् प्रान्सिस्जेवियर्वर्यः स्पेन्देशे नवारेनगरे १५०६ तमे वर्षे जन्म प्राप्तवान् आसीत् । यदा सः महाविद्यालये पठन् आसीत् तदा इग्नेषियस्लयोला-प्रभावं प्राप्य स्वजीवनं देवसेवार्थं समर्पितवान् । १५४२ तमे वर्षे मेमासस्य द्वितीये दिनाङ्के सः गोवाप्रदेशम् आगतवान् । तत्र सः पोर्चुगीस्भाषया कोङ्कणीभाषया च क्रैस्तमतप्रचारं कृतवान् । ततः सः कनोरमण्डलतीरं, श्रीलङ्कां, मलाकां, मोलुकासं, जपानदनेशं, चैनादेशं चापि गत्वा अन्ते 'सञ्चियन्'द्वीपे १५५२ तमे वर्षे डिसेम्बर्मासस्य तृतीये दिनाङ्के प्राणैः वियुक्तः अभवत् । तत्र शवपेटिकायां स्थापितं तदीयं भौतिकशरीरं वर्षद्वयानन्तरम् अपि यथापूर्वम् एव आसीत् । ततः तत् गोवाप्रदेशं प्रति आनीतम् । परिमाणेन किञ्चित् क्षीणम् अपि भौतिकशरीरं दशसु वर्षेषु एकवारं बोम्जेसस्तः सेकेथड्रल्पर्यन्तं भक्तिश्रद्धापूर्वकं शोभायात्रया नीयते ।

गोवा - कृषिप्रधानं राज्यम् - प्रधानधान्यं व्रीहिः

एतां शोभायात्रां द्रष्टुं प्रपञ्चस्य नानाभागेभ्यः लक्षशः भक्ताः आगच्छन्ति ।

बोमजेसस्पुरतः स्थितस्य पर्वतस्य उपरि मोनिका कान्वेण्ट् अस्ति । पश्चिमैशियाप्रदेशे प्राचीनः अतिविशालः च 'धर्मप्रचारकाणां मठः' (नन्नेरी) एषः एव ।



एब् फरिया विग्रहः

गोवाराज्यस्य राजधानी 'पणजी' माण्डोवीनद्याः तीरे अस्ति । राज्यस्य अतिप्राचीनं भवनम् एव राज्यसचिवालयः अस्ति, यच्च पूर्वम् आदिलशाहस्य वासभवनम् आसीत् । स्वप्नवशीकरणद्वारा कस्याश्चित् स्त्रियाः अस्वस्थतां निवारयतः एब्फरियावर्यस्य कांस्यप्रतिमा अत्र अस्ति । फादर् जोस् कष्टोडियो डि फारिया एव एब्फरिया इति निर्दिश्यते । एषः अर्चकः, पण्डितः, विज्ञानी च आसीत् । युवावस्थायाम् एव एषः पोर्चुगल् गतवान् आसीत् । 'स्वप्नवशीकरणस्य पितामहः' इति ख्यातः एषः स्वप्नवशीकरणस्य विज्ञानत्वप्रकल्पने विशेषपरिश्रमं कृतवान् आसीत् । ख्यातः ग्रन्थकर्ता अलेक्साण्डर् डजूमवर्यः स्वकीये 'दि कौण्ट् आफ् माण्ट् क्रिस्टो'नामके ग्रन्थे एतम् उत्तमोत्तमसंन्यासित्वेन चित्रितवान् अस्ति ।

पणजीनगरस्य आग्नेयदिशि प्रसिद्धः मङ्गेशी-शिवालयः अस्ति । 'कलहकारणतः कैलासगिरिवासं परित्यक्तवतः शिवस्य अन्वेषणं कुर्वती पार्वती अत्र आगता आसीत् । अरण्यमार्गे गमनसमये व्याघ्रगर्जनं श्रुत्वा भीता सा 'पाहि मां गिरीश !' इति प्रार्थितवती आसीत् । ततः यत्र शिवः प्रत्यक्षः जातः तत्र 'मां गिरीश'-नामकं मन्दिरं निर्मितम् अभवत्, इति कथा श्रूयते । तदेव पदं मांगीशा → माङ्गीशी → मङ्गेशी इति क्रमशः परिवर्तितम् अभवत् इति भाषा-शास्त्रज्ञाः अभिप्रयन्ति ।



श्री मङ्गेशीदेवालयः



# बालानां दण्डनम्

श्री रङ्गपुरनामके ग्रामे श्रीनाथः नाम कश्चन पण्डितः गुरुकुलं चालयन् आसीत् । तस्य शिष्येषु गदाधरः विद्याधरश्च प्रमुखौ । तयोः विषये विशेषप्रीतिः आसीत् श्रीनाथस्य ।

विद्याभ्याससमाप्तेः अनन्तरं गदाधरः विद्याधरः च स्वग्रामं गतवन्तौ । गदाधरः स्वग्रामे एकां पाठशालाम् आरब्धवान् । अध्यापने तस्य विशेषरुचिः आसीत् एव । अतः अल्पे एव काले उत्तमः गुरुः इति कीर्तिं प्राप्तवान् सः । तस्य कीर्तिं ज्ञात्वा कन्यापिता कश्चन स्वपुत्रीं दमयन्तीं तस्मै दत्तवान् ।

केचन मासाः अतीताः । दमयन्ती सुन्दरं पुत्रं प्रसूतवती । तस्य पुत्रस्य नाम सुन्दरः इति कृतम् । सुन्दरः द्विवर्षीयः जातः ।

अथ कदाचित् गदाधरः स्वपत्न्या अनसूयया, द्विवर्षीयेण पुत्रेण चन्द्रनाथेन च सह आत्मीयस्य मित्रस्य गदाधरस्य गृहम् आगतवान् ।

दीर्घकालानन्तरं परस्परं मिलितौ गदाधरः विद्याधरश्च नितरां सन्तुष्टौ जातौ । कुशलप्रश्नानन्तरं विद्याधरः स्वविषये उक्तवान् - ''अहं नगरे वाणिज्येन प्रभूतं धनं सम्पादयन् सुखेन अस्मि'' इति । गदाधरः अपि स्ववृत्तिविषये कुटुम्ब-सुख-दुःखादि-विषये च सर्वम् उक्तवान् ।

यदा एतौ एवं वार्तालापं कुर्वन्तौ आस्तां तदा तयोः पत्न्यौ अपि जल्पने मग्ने आस्ताम् । केनापि बालौ न लक्षितौ एव । अत्रान्तरे चन्द्रनाथः उच्चैः रोदनं कृतवान् । यतः सुन्दरः तं ताडितवान् आसीत् ।

एतत् दृष्ट्वा धावन् गतः विद्याधरः पुत्रम् उन्नीय सान्त्वयन् गदाधरम् उक्तवान् - ''मित्र, भवतः पुत्रः दुश्चेष्टापरः । अल्पवयस्के बाले एषा प्रवृत्तिः नितराम् अशोभावहा'' इति ।

तदा गदाधरः हसन् उक्तवान् - ''मम पुत्रस्य बुद्धिमत्ता अपूर्वा । यद्यत् वदामः तत्सर्वं श्रद्धया शृणोति सः । किन्तु तस्य



प्रमुखः दोषः नाम अन्यबालानां ताडनम्। तस्य एतं दुर्गुणं वयं निवारयितुं न शक्तवन्तः एव। अतः लघुबालान् तस्य समीपं वयं न प्रेषयामः एव। अद्य वार्तालापसमये मया मत्पत्न्या च एतत् विस्मृतम् आसीत्। अतः एवं प्रवृत्तम्'' इति।

''किं हासेन ? पुत्रः दुश्चेष्टां यथा न कुर्यात् तथा उपायं चिन्तयतु प्रथमम्'' इति कोपेन उक्तवान् विद्याधरः।

''द्विवर्षीयः अल्पबालः सः अस्माभिः बोधितः चेदपि किं वा अवगच्छेत् ?'' इति पृष्टवान् गदाधरः।

तदा विद्याधरः उक्तवान् - ''मम पुत्रस्य अपि एतादृशः दुरभ्यासः आसीत्। समये मया सः सम्यक् ताडितः। तेन तस्य एषा प्रवृत्तिः अपगता। इदानीं कमपि न ताडयति सः'' इति।

''यावत् विवेकः उदितः न भवति तावत् ताडनादिदण्डनेन अपि न किमपि प्रयोजनम्। प्रतिदिनम् अपि तम् अहं बोधयन् भवामि - एवं न करणीयम् इति। द्वित्राणां वर्षाणाम् अनन्तरं सः एतत् अवगच्छेत् इति भाति मम'' इति उक्तवान् गदाधरः।

''भवतः पुत्रस्य व्यवहारस्य दर्शनात् भासते यत् तस्य बोधनार्थं केनापि प्रयत्नः क्रियमाणः एव नास्ति इति'' इति उक्तवान् विद्याधरः।

अनन्तरदिने विद्याधरः पत्नीपुत्राभ्यां सह स्वगृहं गतवान्। विद्याधरे महती श्रद्धा आसीत् गदाधरस्य। अतः सः विद्याधरस्य वचनस्य अनुगुणं पुत्रस्य दण्डनम् आरब्धवान्। सुन्दरः अल्पां दुश्चेष्टां करोति चेदपि गदाधरः तं ताडयति स्म। एतेन सुन्दरस्य दुश्चेष्टाः न न्यूनीजाताः। किन्तु सुन्दरः पितुः भीतः जातः। पितुः छायादर्शनमात्रात् एव सः महतीं भीतिं प्राप्नोति स्म। अतः कदापि सः पितुः समीपम् एव न आगच्छति स्म।

अथ कदाचित् आचार्यः श्रीनाथः गदाधरस्य गृहम् आगतवान्। सः गदाधरम् उक्तवान् - ''शिष्यः पुत्रसमानः इति स्मृतयः वदन्ति। अतः भवतः पुत्रः मम पौत्रसमः। कुत्र सः भवतः पुत्रः ? तम् आह्वयतु तावत्'' इति।

तदा गदाधरः पत्नीम् आहूय गुरोः आशयं श्रावयित्वा ततः निर्गतवान्। असमये गदाधरस्य निर्गमनं दृष्ट्वा आश्चर्यम् अनुभवन् श्रीनाथः सुन्दरं प्रीत्या आहूतवान् - ''वत्स, आगच्छतु अत्र'' इति।

सुन्दरं प्रीत्या लालयन्तं श्रीनाथम् उद्दिश्य दमयन्ती - "आर्यपुत्रस्य दर्शनमात्रात् भीत्या कम्पते एषः । अतः आर्यपुत्रः इतः निर्गतः" इति वदन्ती प्रवृत्तं सर्वं निवेदितवती ।

तदा श्रीनाथः गदाधरम् आहूय - "किं विवेकः सर्वथा नष्टः भवतः ? अन्यस्य वचने विश्वस्य अल्पे बाले राक्षसीयव्ययवहारः किं शोभते ?" इति वदन् सम्यक् तर्जितवान् ।

"गुरुवर्य, विद्याधरः मम आत्मीयः आदर्शप्रतीकं च । गम्भीरचिन्तनस्य फलं भवति तस्य वचनम् । अतः तस्मिन् विश्वासः कृतः मया" इति उक्तवान् गदाधरः ।



एतत् श्रुत्वा श्रीनाथः उक्तवान् - "विद्याधरस्य चिन्तनं कीदृशम् इत्यादिकम् अहं जानामि । बालानां व्यवहारः कीदृशः भवति इति न जानाति भवान् । बाल्ये योग्यस्य पोषणस्य अभावात् एव अपराधप्रवृत्तिमन्तः निर्मिताः भवन्ति । प्रीतिपूर्णव्यवहारात् बोधनात् च बालाः परिष्कृताः भवन्ति, न तु दण्डनेन । दण्डनात् बालानां परिष्कारः शक्यः इति तु अस्माकं भ्रान्तिः एव । प्रीतिः एव फलदायिनी, न तु दण्डनम् । अतः पुत्रेण सह प्रीत्या व्यवहरतु सदापि" इति ।

एतावता अपि गदाधरस्य मनः न समाहितम् । एतत् अवगच्छन् श्रीनाथः पुनः उक्तवान् - "आगच्छतु भवान् मया सह । विद्याधरं दृष्ट्वा आगच्छाम । तेन भवतः सन्देहः निवृत्तः भवेत्" इति ।

अनन्तरदिने प्रस्थाय तौ विद्याधरस्य गृहं प्राप्तवन्तौ । विद्याधरः मित्रं गुरुं च आदरेण सत्कृतवान् । वार्तालापसमये श्रीनाथः गदाधरस्य पुत्रस्य दुश्चेष्टाः उपवर्णितवान् । तत् श्रुत्वा विद्याधरः असन्तोषेण - "दुश्चेष्टापराः बालाः मह्यं न रोचन्ते । अतः एव सुन्दरः दण्डनेन निग्रहणीयः इति मया सूचितम्" इति उक्तवान् ।

"विद्याधर, दुश्चेष्टापरत्वं बालानां स्वभावः । केनचित् प्रमाणेन तत् अस्माभिः सोढव्यम् । तेषां सद्व्यवहारं दृष्ट्वा सन्तोष्टव्यम् अस्माभिः । दण्डनात् एतादृशबालानां स्वभावस्य परिष्कारः न भवति" इति उक्तवान् श्रीनाथः । किन्तु एतम् अंशं न अङ्गीकृतवान् विद्याधरः ।

रात्रौ भोजनसमये अनसूया त्रयाणां कृते अपि कटं प्रसार्य भोजनपत्रं प्रसारितवती । सर्वे सम्भाषणं कुर्वन्तः भोजने उद्युक्ताः अभवन् ।

तत्समये बालः चन्द्रनाथः जलकलशं गृहीत्वा इतस्ततः अटनम् आरब्धवान् । तत् दृष्ट्वा आचार्यः श्रीनाथः आतङ्कमिश्रितेन स्वरेण - "सः जलं पातयेत् । ततः कलशं स्वीकरोतु भवती" इति अनसूयाम् उक्तवान् ।

अनसूया चन्द्रनाथतः कलशं स्वीकर्तुम् उद्युक्ता । तदा विद्याधरः - "मास्तु कलश-स्वीकरणम् । ततः कलशः स्वीकृतः चेत् उच्चैः रोदनं कुर्यात् सः । यदि तस्य रोदनस्य आरम्भः भवति तर्हि स्थगनं क्लेशाय । अन्यच्च सः कलशं दृढं गृहीतवान् अस्ति इत्यतः कलशपतनस्य भीतिः तु सर्वथा नास्ति" इति ।

अत्रान्तरे चन्द्रनाथः पितुः भोजनपत्रे जलं पातितवान् । एतत् दृष्ट्वा यदा विद्याधरः आसनात् उत्थितः तदा श्रीनाथः उक्तवान् - "वत्स, अल्पवयस्कस्य तस्य विवेकः अपि अल्पः एव । अतः इदानीं तं मा ताडयतु कृपया" इति ।

तदा विद्याधरः आश्चर्येण - "एतस्य अल्पस्य कारणस्य निमित्तम् अहं किमर्थं तं ताडयेयम् ? भोजनपत्रे पतितं जलं बहिः क्षेप्तुम् अहम् उद्युक्तः" इति उक्तवान् ।

एतत् श्रुत्वा श्रीनाथः गदाधरं पश्यन् - "अल्पबालैः यदि दोषः क्रियते तर्हि ते दण्डनीयाः इत्येतस्मिन् विद्याधरवचने विश्वासः कृतः आसीत् खलु भवता ? किन्तु विद्याधरस्य व्यवहारः एतादृशप्रसङ्गे कथं भवति इति इदानीं प्रत्यक्षं दृष्टं खलु ?" इति उक्तवान् ।

सर्वं श्रुत्वा मूकत्वं गतः विद्याधरः श्रीनाथ-गदाधरयोः आगमनोद्देशं जानन् - "गुरुवर्य, मदीयः दोषः इदानीं मया अवगतः अस्ति । कृपया क्षन्तव्यः अहम्" इति प्रार्थितवान् ।

शिष्यस्य वचनं श्रुत्वा श्रीनाथः - "वत्स, किं खेदेन ? ये बालानां दण्डनम् उपदिशन्ति ते अपि स्वपुत्रविषये तावत् मृदुतया एव व्यवहरन्ति । बालानां विषये मृदुता एव शोभते । अतः भवता कृतं युक्तम् एव । इतः परं कदापि कमपि बालदण्डनं मा उपदिशतु" इति उक्तवान् ।

ततः आरभ्य गदाधर-विद्याधरौ स्वपुत्रौ प्रीत्या एव पश्यन्तौ विवेकं बोधयितुं प्रयत्नं कुर्वन्तौ सुखेन जीवितवन्तौ ।





## चन्दमामायाः

# सुवर्णसमयः

## अन्तरिक्षे भीकरः मृगः



















# सुवर्ण-समयस्य प्रश्नावली



१. व्योमप्रयाणं कृतवान् भारतीयव्योमगामी - 'उपरिष्टात् भारतं कथं दृश्यते स्म ?' इति यदा पृष्टः तदा 'सारे जहाँ से अच्छा' इति उत्तरम् उक्तवान् । सः व्योमगामी कः ? कस्मिन् वर्षे सः व्योमयानं कृतवान् ?





३. सञ्चरन् एषः शिलाखण्डः 'नेरस्' इति उच्यते । एतस्य वैशाल्यं प्रायः ९५० कि.मी. । एषः शिलाखण्डः कुत्र अस्ति ? किम् एतस्य वैशिष्ट्यम् ?

७. एतैः धृतं वेषभूषादिकं दृष्ट्वा किं भवन्तः ऊहितुं शक्नुवन्ति यत् एते भारतस्य कस्य भागस्य जनाः इति ?

४. श्रीकृष्णस्य, तदग्रजस्य बलभद्रस्य, तत्सहोदर्याः सुभद्रायाः च काष्ठविग्रहः १२ शतके कस्मिंश्चित् देवालये प्रतिष्ठापितः । ततः आरभ्य जनैः पूज्यमानस्य तस्य सुप्रसिद्धस्य देवालयस्य नाम किम् ?



५. १९९६ तमवर्षस्य फेब्रवरीमासस्य प्रथमे दिनाङ्के ३० मीटर्-गभीरात् कूपात् कश्चन मण्डूकः उपरि आगन्तुं प्रयत्नम् आरब्धवान् । प्रतिदिनं सः ३ मीटर् उपरि गच्छति स्म, रात्रौ द्विमीटर् अधः सरति स्म च । एवं तर्हि सः मण्डूकः एतेन एव क्रमेण अग्रे गच्छन् कस्मिन् दिनाङ्के कूपात् बहिः आगतः इति किं वक्तुं शक्नुवन्ति भवन्तः ?

२. सवायी राजा जयसिंहवर्यः जन्तर्मन्तर्नामिकां वेधशालां (अब्सर्वेटरी) निर्मितवान् । ततः वाराणस्याम् अपि तादृशभवनानि निर्मितानि । क्रि.श. १९२० तमे वर्षे प्रपञ्चस्तरे अतिमहत्त्वेन ख्यातां सूर्यघटीं (सन् डयल्) निर्मापितवान् सः । तस्याः सूर्यघट्याः नाम किम् इति जानन्ति वा भवन्तः ?

$$\exists 4 + 4 | = |$$

६. अग्निशलाकाद्वयस्य स्थानपरिवर्तनेन एतत् गणितं यथायोग्यं कर्तुं शक्यते । तदर्थं प्रयत्नं कुर्वन्तु भवन्तः ।



# ३-डि-मुखावरणं निर्मान्तु भवन्तः







१. बलूनूसाधनं स्वीकृत्य तस्य अन्तः वायुं पूरयन्तु । यदा तत् बृहदाकारकं भवति तदा तस्य मुखं तन्तुना बध्नन्तु ।

२. एकं कागदं स्वीकृत्य ततः ३.सें.मी. आकारकान् कागदखण्डान् निर्मान्तु ।

३. बलूनूसाधनस्य अधोभागं विहाय इतरत्र तान् कागदखण्डान् एकैकशः लिम्पन्तु । यदा ते कागदखण्डाः शुष्काः भवन्ति तदा तदुपरि पुनरपि कागदखण्डानां लेपनं कुर्वन्तु । यदा कागदखण्डाः शुष्काः भवन्ति तदा पुनरपि कागदखण्डानां लेपनेन अन्यं स्तरं निर्मान्तु । एवं स्तरत्रयं निर्मितं भवतु ।

४. कागदखण्डस्तराः यदा शुष्काः भवन्ति तदा बलूनूसाधनस्य अन्तः स्थितं वायुम् अपनयन्तु । अनन्तरं तत् कागदस्तरतः जागरूकतया पृथक्कुर्वन्तु । इदानीं भवद्भिः अन्तस्साररहितम् आवरणं लभ्यते । एतस्य अन्तः शिरः प्रवेशयितुं यावत् आवश्यकं तावन्तं भागं कर्तयन्तु ।

५. ततः नेत्रयोः नासिकायाश्च निमित्तं रन्ध्रं निर्मान्तु । अनन्तरं वर्णेन अन्यैः अलङ्कारसाधनैः च तत् मुखावरणम् अलङ्कुर्वन्तु । अत्र भवतां निमित्तं मुखावरणस्य द्वित्राः प्रकाराः सूचिताः सन्ति ।



## त्रिभिः सुकरैः क्रमैः गजस्य चित्रं निर्मान्तु भवन्तः ।





# महाभारतम्

दुर्योधनः पाण्डवविषयिण्या ईर्ष्यया दिने दिने क्षीणतां गतः । तस्य एतां दशां दृष्ट्वा शकुनिः कदाचित् पृष्टवान् - ''दुर्योधन, का चिन्ता बाधते ?'' इति ।

तदा दुर्योधनः उक्तवान् - ''मातुल, अर्जुनस्य पराक्रमम् आधारीकृत्य धर्मराजः समग्रभूमण्डलं जित्वा राजसूययागं कृत्वा साम्राज्यलक्ष्मीं वृतवान् अस्ति । राजानः सर्वे तस्य वशं गताः सन्ति । अतः एव कृष्णः यदा राजसभायां शिशुपालस्य संहारं कृतवान् तदा अपि कोऽपि प्रतिरोधं न कृतवान् । प्रत्युत एकैकः अपि धनकनकादीनि आनीय पाण्डवानां पदतले समर्पितवान् । तेषां वैभवं वर्णनातीतम् अस्ति । अतः मम सम्पत्तिः इदानीं क्षुद्रायते । यदा मयसभां द्रष्टुं वयं गताः तदा अस्माभिः कीदृशम् अपमाननम् अनुभूतम् इति भवान् जानीयात् एव । अस्मान् सर्वान् यागव्यजेन आहूय स्वसम्पत्तेः प्रदर्शनं कुर्वन्तः ते अस्मासु असूयाग्निम् उद्दीपितवन्तः । मयसभायां प्रतिपदं वञ्चनातन्त्रं योजयन्तः ते अस्मान् पुनः पुनः अपमानयन्तः महान्तं सन्तोषम् अनुभूतवन्तः । वयं तु अवमानभरेण नतशिरस्काः जाताः । अतः मम जीवने जुगुप्सा उत्पन्ना अस्ति । कं वदामि मम एतां स्थितिम् ?'' इति ।

एतत् श्रुत्वा शकुनिः उक्तवान् - ''दुर्योधन, अलं निर्वेदेन । किम् असूयया ? असूयां खेदं च प्राप्य निष्क्रियतया स्थितिः न शोभते । पाण्डवानाम् उत्कर्षः एव एतस्य सर्वस्य कारणं खलु ? अतः तस्य निवारणं



कथम् इति चिन्तयतु भवान् । दैवबलात् ते एवं विराजमानाः सन्ति । अतः एव तेषां दर्पस्य निवारणे भवता कृताः सर्वे प्रयत्नाः विफलाः जाताः । द्रौपदी तेषां पत्नी अस्ति यत् तत् तेषां परमसौभाग्याय जातम् अस्ति। द्रुपदः तेषां साहाय्यं निरन्तरं करोति । कृष्णस्य विषये तु मया वक्तव्यम् एव नास्ति । आ बाल्यात् सः पाण्डवानां बलस्य वर्धने निमग्नः । खाण्डववनदहन-समये अग्नेः साहाय्यम् आचरन्तः अर्जुनादयः अपूर्वाणि शस्त्रास्त्राणि रथादीनि च प्राप्तवन्तः । ततः एव मयसभा अपि प्राप्ता तैः । किन्तु किम् एतेन सर्वेण ? भवान् अपि अकिञ्चनः सामान्यः वा न । भवतः यादृशं सैन्यबलम् अस्ति तादृशं किं तेषाम् अस्ति ? भवान् न असहायः । नवनवतिः सहोदराः, आचार्यः द्रोणः, सकलविद्याकोविदः अश्वत्थामा, महारथिः कर्णः, कृपाचार्यः च भवत्पक्षे सन्ति । अहम् अपि भवतः पक्षे अस्मि एव । एवं स्थिते किं निर्वेदेन ?'' इति ।

''एवं तर्हि वयं ससैन्यं गत्वा पाण्डवान् युद्धे जित्वा तेषां सम्पत्तिं स्वायत्तीकृत्य मयसभां हस्तिनापुरं प्रति आनयाम'' इति उक्तवान् दुर्योधनः ।

''दुर्योधन, युद्धे पाण्डवान् जेतुं प्रायः न शक्यते । अतः किं युद्धप्रस्तावेन ? विशेषपरिश्रमं विनैव तान् जेतुं सुलभोपायम् अहं वदिष्यामि । धर्मराजः द्यूते आसक्तः । अतः भवान् तं द्यूतार्थम् आमन्त्रयतु । अहं तं द्यूते जित्वा तस्य राज्यं सम्पत्तिं च भवते दास्यामि । किन्तु एतदर्थं भवता कथञ्चित् धृतराष्ट्रस्य अनुमतिः सम्पादनीया'' इति सूचितवान् शकुनिः ।

यदा शकुनिः दुर्योधनश्च धृतराष्ट्रसमीपं गतवन्तौ तदा धृतराष्ट्रः धर्मराजेन कृतस्य यागस्य विषये वार्तालापं कुर्वन् सन्तोषम् अनुभवन् आसीत् ।

तदा शकुनिः तम् उक्तवान् - ''अस्माकं दुर्योधनः चिन्ताक्रान्तः सन् क्षीणतां गतः अस्ति । तस्य मुखं कान्तिहीनं जातम् अस्ति । मम जीवनम् एव व्यर्थम् इति वदन् अस्ति सः'' इति ।

एतत् श्रुत्वा नितरां खिन्नः धृतराष्ट्रः दुर्योधनं स्वसमीपम् आहूय प्रीत्या तस्य शरीरं स्पृशन् - ''वत्स, भवतः क्षीणतायाः किं कारणम् ? का चिन्ता बाधते भवन्तम् ?'' इति पृष्टवान् ।

तदा दुर्योधनः - ''मम मनः चिन्ताक्रान्तम् अस्ति । निद्रा मां न आलिङ्गति । भोजनं न रोचते । शत्रोः उन्नतिं

को वा वीरः सहेत ? धर्मराजः इदानीं अतिशयसम्पत्त्या विराजते, दर्पेण व्यवहरति च । एवं स्थिते मम कृशता कथं न भवेत् ?'' इति उक्तवान् ।

तदा शकुनिः दुर्योधनम् उद्दिश्य उक्तवान् - ''महाराज, अलम् एतादृशेन खेदेन । धर्मराजः द्यूते विशेषतः आसक्तः अस्ति । किन्तु तदर्थम् अपेक्षितं महानैपुण्यं तस्य अस्ति इति न । द्यूते अहं भवत्प्रतिनिधिः सन् क्रीडन् तदीयं राज्यम् ऐश्वर्यं च सम्पाद्य भवते दास्यामि । भवान् धर्मराजं द्यूतार्थम् आह्वयतु'' इति ।

तदा दुर्योधनः पितुः पादौ गृहीत्वा - ''शकुनिः यथा वदति तथा कर्तुम् अनुमतिं ददातु कृपया'' इति प्रार्थितवान् ।

''एवं तर्हि विदुरः यथा वदति तथा आचराम वयम्'' इति दुर्योधनम् उक्तवान् धृतराष्ट्रः ।

''विदुरः एतं प्रस्तावं सर्वथा न अङ्गीकुर्यात् । तदा द्यूतः न भविष्यति एव । किन्तु द्यूतः यदि न भविष्यति तर्हि अहम् प्राणत्यागं करिष्यामि । भवान् विदुरः चापि राज्यं पालयतां नाम'' इति कोपेन उक्तवान् दुर्योधनः ।

धृतराष्ट्रस्य पुत्रव्यामोहः अधिकः । दुर्योधनः 'प्राणत्यागं करिष्यामि' इति यदा उक्तवान् तदा पुत्रवियोगाशङ्कातः नितरां भीतः धृतराष्ट्रः दुर्योधनस्य प्रस्तावम् अङ्गीकृतवान् ।

ततः सः निपुणान् शिल्पिनः आहूय आदिष्टवान् - ''मयसभातः अपि श्रेष्ठः सभामण्डपः निर्मातव्यः भवद्भिः । तस्य सहस्रं स्तम्भाः, शतं द्वाराणि च स्युः ।



विविधैः शिल्पैः स च मण्डपः विशेषतः अलङ्करणीयः'' इति ।

अनन्तरं सः विदुरम् आहूय दुर्योधन-शकुन्योः दुश्चिन्तनं किमपि अनिवेद्य - ''धर्मराजं द्यूतार्थम् आहूय आगच्छतु'' इति एतावन्मात्रम् एव सूचितवान् ।

तदा विदुरः धृतराष्ट्रम् उक्तवान् - ''महाराज, एतत् युक्तं न इति भाति मम । द्यूततः कुलबान्धवानां मध्ये वैरम् उत्पत्स्यते । अतः द्यूतचिन्तनं परित्यजतु कृपया'' इति ।

''विदुर, द्यूते दोषाः कदाचित् स्युः नाम । किन्तु द्यूतः स्नेहपूर्वकं यदि प्रवर्तेत तर्हि न तत्र हानिः । यदि कदाचित् वैरभावना उत्पद्येत तर्हि तां निवारयितुं भवान्, अहं, भीष्मः, द्रोणः इत्यादयः स्मः एव । अतः भवान् सरथम् इन्द्रप्रस्थं गत्वा धर्मराजम् अत्र आनयतु'' इति उक्तवान्



धृतराष्ट्रः ।

विदुरः एतं विषयं भीष्मं निवेद्य तदीयम् अभिप्रायं प्राप्तुम् इच्छन् ततः भीष्मसमीपं गतवान् ।

तस्य निर्गमनस्य अनन्तरं धृतराष्ट्रः पुत्रम् आहूय पुनरपि बोधितवान् - ''वत्स, एतं द्यूतविचारं परित्यजतु । यदि साम्राज्याधिपतित्वम् एव इष्यते तर्हि भवान् अपि राजसूययागं करोतु'' इति ।

किन्तु दुर्योधनः एतत् सर्वथा न अङ्गीकृतवान् ।

''द्यूतम् अपि युद्धसदृशम् एव । युद्धे शक्तेः आधारेण, द्यूते बुद्धिबलस्य आधारेण च जयापजययोः निर्णयः भवति । अतः द्यूतः कथमपि न निन्द्यः'' इति धृतराष्ट्रम् उक्तवान् शकुनिः ।

धृतराष्ट्रस्य अपेक्षानुगुणं हस्तिनापुरे अपि अपूर्वं सभाभवनं निर्मितम् अभवत् ।

धृतराष्ट्रः पुनरपि विदुरम् आहूय - ''नूतने सभाभवने प्रचलति द्यूते भागः ग्रहीतव्यः भवता इति धर्मराजं निमन्त्र्य आगच्छतु भवान्'' इति सूचितवान् ।

'एतस्मात् कार्यात् न मम मोक्षः' इति निश्चित्य विदुरः रथम् आरुह्य इन्द्रप्रस्थं प्रति प्रस्थितवान् ।

धर्मराजः विदुरं सहर्षं यथोचितं सत्कृत्य - ''आर्य, अपि कुशलं भवतः ? धृतराष्ट्र-दुर्योधनादयः अपि कुशलिनः ? किमर्थं भवतः मुखं म्लानं दृश्यते ?'' इति पृष्टवान् ।

तदा विदुरः उक्तवान् - ''सर्वत्र कुशलम् एव अस्ति । मयसभासदृशं नूतनं सभाभवनं निर्मितम् अस्ति हस्तिनापुरे । भवता तत्र कानिचन दिनानि वासः करणीयः इति, द्यूतादिना सुखेन कालः यापनीयः इति च दुर्योधनादीनाम् इच्छा । एतत् निवेदयितुम् एव धृतराष्ट्रः मां प्रेषितवान् अस्ति । 'द्यूतात् विना मम मनःसन्तोषः एव न भवति' इति वदन् अस्ति दुर्योधनः । अतः तस्य अपेक्षां पूरयतु कृपया'' इति ।

एतत् श्रुत्वा आश्चर्यचकितः धर्मराजः - ''हा हन्त, ज्येष्ठानाम् अस्माकं द्यूते प्रवृत्तिः किं शोभते ? किम् एतेन अपकीर्तिः न भवेत् ? एतद्विषये भवतः आशयः कः ? भवान् यथा आदिशति तथा करिष्यामि अहम्'' इति उक्तवान् ।

''द्यूतः कलहाय भवेत् इति मया बहुधा उक्तं चेदपि धृतराष्ट्रः मम वचनं न अङ्गीकृतवान् एव । भवन्तम् आनेतुं माम् अत्र प्रेषितवान् अस्ति सः । अतः यथोचितनिर्णयः इदानीं भवता एव

करणीयः । धृतराष्ट्रस्य प्रतिनिधित्वेन आगतः अहं एतद्विषये कमपि निर्णयं न श्रावयामि'' इति उक्तवान् विदुरः ।

''तत्र द्यूते के के आसक्ताः दृश्यन्ते ?'' इति पृष्टवान् धर्मराजः ।

''शकुनिः, विविंशतिः, चित्रसेनः, सत्यव्रतः, पुरुमित्रः, जयश्च तत्र उत्सुकिनः'' इति उक्तवान् विदुरः ।

''एवं तर्हि सर्वे द्यूतकराः एकत्र सम्मिलिताः सन्ति । तैः सह द्यूतः अवश्यम् अपायकरः । किन्तु किं करवाणि, ज्येष्ठानाम् अपेक्षा अतिरस्करणीया । आज्ञासमा सा । द्यूतार्थम् यदा आह्वानं भवति तदा निराकरणं न प्रदर्शनीयम् इति तु क्षत्रियधर्मः । अतः मया तदर्थं गन्तव्यम् एव । किन्तु आन्तरिकी भीतिः बाधते माम् । अलं चिन्तनेन । भवितव्यं भवेत् एव । अतः श्वः गच्छाम तावत्'' इति उक्तवान् धर्मराजः ।

अनन्तरदिने तयोः तत्परिवारजनानां च प्रयाणम् आरब्धम् । सर्वे हस्तिनापुरं प्राप्तवन्तः । धर्मराजः धृतराष्ट्र-द्रोण-कृपाश्वत्थामादीन् ज्येष्ठान् श्रद्धया नमस्कृतवान् । कनिष्ठैः सह आत्मीय-वार्तालापं कृत्वा गान्धारीसमीपं गत्वा योगक्षेमं विचारितवान् । द्रौपद्याः मुखे दृश्यमानां विशेषकान्तिं दृष्ट्वा मत्सरं प्राप्तवत्यः भानुमत्यादयः ।

अनन्तरदिने प्रातर्विधिं समाप्य द्यूतसभां गतवान् धर्मराजः । तावता शकुनिः, दुश्शासनः, दुर्योधनः इत्यादयः तत्र उपस्थिताः आसन् ।

ततः शकुनिः धर्मराजम् उक्तवान् - ''महाराज, भवन्तं द्रष्टुम् एव बहवः अत्र उपस्थिताः सन्ति । केचन कालक्षेपार्थम् अत्र आगताः । पुनः केचन भवता सह द्यूतक्रीडार्थम् आगताः सन्ति । किं विलम्बेन ? पणं निश्चित्य द्यूतस्य आरम्भं करवाम'' इति ।

तदा धर्मराजः शकुनिम् उक्तवान् -





''आर्य, द्यूते वञ्चनामार्गस्य आश्रयणं पापाय । वञ्चनं न क्षत्रियोचितम् । अतः द्यूतसमये वञ्चनामार्गस्य आश्रयणं मास्तु इति मम प्रार्थना । द्यूततः यत् सम्पाद्यते तत् लोकसंरक्षणार्थं सत्कार्यार्थं च उपयुञ्महे वयम्'' इति ।

''किम् एतत् सारहीनं वचनम् ? शस्त्री शस्त्रेण, पण्डितः पाण्डित्येन, मल्लः मल्लविद्यया च प्रतिस्पर्धिनं जयति । अतः द्यूते द्यूतानुगुणः व्यवहारः क्रियते सर्वेण अपि । अत्र जयप्राप्तिः प्रमुखा भवति, न तु मार्गः । द्यूते कथं व्यवहरणीयम् इति भवता उपदेष्टव्यं नास्ति । द्यूते मम विशेषनैपुण्यम् अस्ति । सर्वे द्यूतनियमाः मया सम्यक् ज्ञायन्ते एव । भवान् अपि मम सामर्थ्यं जानाति । तथापि आत्मनः धर्ममूर्तित्वं ख्यापयितुं भवान् एवं माम् उपदिशन् अस्ति । किम् एतेन उपदेशेन ? यदि भवते एतत्सर्वं न रोचते तर्हि प्रतिगन्तुम् अर्हति भवान्'' इति उक्तवान् शकुनिः ।

तदा धर्मराजः - ''सम्भाव्यमानम् अपायं मनसि निधाय प्रतिगमनं क्षत्रियोचितं न । अतः फलाफलम् अविचिन्त्य द्यूते प्रवृत्तः भविष्यामि । कः मम प्रतिस्पर्धी भविष्यति ?'' इति पृष्टवान् ।

''मम प्रतिनिधित्वेन मातुलः शकुनिः क्रीडिष्यति । सः यत् पणीकरिष्यति तत् अहं दास्यामि'' इति उक्तवान् दुर्योधनः ।

''कस्यचित् प्रतिनिधित्वेन कश्चित् क्रीडति इत्येतत् अश्रुतपूर्वम् । एतत् न्यायसम्मतम् अपि न । किन्तु यत्र न्यायान्यायचिन्ता एव न प्रवर्तते तत्र किं न्यायचिन्तनेन ? अग्रे स्थापितं पदं प्रतिनेतुं न शक्नोमि इत्यतः अहम् अपि क्रीडिष्यामि । क्रीडारम्भः भवतु नाम'' इति उक्तवान् धर्मराजः ।

द्यूतं द्रष्टुं यदा धृतराष्ट्रः आहूतवान् तदा भीष्म-द्रोण-कृप-विदुरादयः अन्ये कुरु-वृद्धाः च आगत्य यथोचितम् आसनम् अलङ्कृतवन्तः ।

आदौ धर्मराजः स्वकण्ठहारस्य प्रवालमणिं पणीकृतवान् । प्रतिक्रियारूपेण दुर्योधनः मणिहारान् एव पणीकृतवान् । प्रथमे चक्रे दुर्योधनपक्षस्य एव जयः अभवत् । अनन्तरचक्रेषु अपि तथैव । एकैकं वस्तु पणीकुर्वन् धर्मराजः पराजयं प्राप्नुवन् आसीत् ।

यथा यथा पराजयः प्राप्तः तथा तथा धर्मराजस्य विवेकहीनता प्रवृद्धा । सः सुवर्णहारान्, हस्त्यश्वरथादीन्, दास-दासीः, निधीन्, अन्यविधसम्पत्तीः च पणीकृत्य

अपि पराजयं प्राप्तवान् ।

एतत् अन्याय्यं द्रष्टुम् अशक्तः विदुरः धृतराष्ट्रम् उद्दिश्य - "विनाशकाले विपरीतबुद्धिः इति वचनं भवता श्रुतम् एव । तादृशे काले हितवचनं न रोचते । तथापि कर्तव्यबुद्ध्या किञ्चित् वदामि । भवन्तः वञ्चनाक्रमेण द्यूतम् आयोज्य पाण्डवानां सम्पत्तिं स्वायत्तीकुर्वन्तः सन्ति । एतत् लुण्ठनम् एव । एतेन भवताम् एव हानिः भविष्यति । अलं द्यूते पाण्डवानाम् उद्दीपनेन । एतस्य द्यूतस्य घोरः परिणामः निश्चितः । एतेन कुलनाशः एव भवेत् । अतः द्यूतम् इदानीम् एव स्थगयतु" इति बोधितवान् ।

किन्तु धृतराष्ट्राय एतत् वचनं न अरोचत। विदुरस्य एतादृशस्य वचनस्य श्रवणात् क्रुद्धः दुर्योधनः कटुवचनैः विदुरं निन्दितवान् ।

अत्रान्तरे समग्रां सम्पत्तिं, राज्यं, प्रजाः च पणीकृत्य पराजयं प्राप्तवान् आसीत् धर्मराजः ।

शकुनिः विजयगर्वेण हसन् अक्षान् धर्मराजस्य पुरतः पातयित्वा उपहास-मिश्रितेन स्वरेण पृष्टवान् - "इदानीं किं करिष्यति भवान् ? पणीकर्तुं किं वा अस्ति भवतः समीपे ?" इति ।

अपमानं सोढुम् अशक्तः धर्मराजः नकुलसहदेवौ पणीकृतवान् । तत्रापि तस्य पराजयः ! ततः सः अर्जुनं भीमं च पणीकृतवान् । पुनरपि पराजयः !! अन्ते आत्मानम् एव पणीकृतवान् सः । हा हन्त, तत्रापि तस्य पराजयः एव !!!

"इतः परं किम् अस्ति भवदीयम् ? द्रौपदीमात्रम् अवशिष्टम् । ताम् अपि पणीकरोतु भोः" इति उपहासमिश्रितस्वरेण उक्तवान् शकुनिः ।

धर्मराजः तथैव कृतवान् । तदा कौरवसभायां कोलाहलः उत्पन्नः । "कौरवाणाम् अन्त्यकालः सन्निहितः अस्ति" इति केचन स्वगतम् उक्तवन्तः । भीष्म-द्रोण-कृपादयः सर्वं पश्यन्तः अपि अपश्यन्तः इव व्यवहरन्तः मौनम् आश्रितवन्तः । विदुरः खेदेन, कोपेन, असहायकतया च तप्यमानः आसीत् । कर्ण-दुर्योधन-दुश्शासनादयः महान्तं सन्तोषम् अनुभवन्तः आसन् ।

- (अनुवर्तते)



# निम्बजातिविशेषीयः वृक्षः

कान्तियुक्तैः हरिद्वर्णीयैः द्वादशाङ्गुलदीर्घैः पर्णैः युक्तः एषः वृक्षः निम्बजातीयः इव दृश्यते चेदपि सामान्यनिम्बवृक्षः तु न । सामान्यः निम्बवृक्षः उन्नतः भवति । पर्णानि अपि तस्य लघूनि भवन्ति । एतस्य वृक्षस्य तु पर्णानि विशालानि उपपर्णैः विभक्तानि च भवन्ति । एतद्वृक्षस्य पर्णानि अण्डाकारकाणि वक्राग्राणि च भवन्ति ।

हिन्दीभाषया एषः वृक्षः 'बाकौस्' इति, बङ्गालीभाषया 'महानीम्' इति, तमिलुभाषया 'मलैवेम्बु' इति, मलयाळभाषया 'करीनवेम्बु' इति, तेलुगुभाषया 'महानवेपा' इति, मराठीभाषया 'पेज्री' इति, गुजरातीभाषया 'बाकान् लिम्डो' इति च निर्दिश्यते । आंग्लभाषया एषः वृक्षः 'बीड् ट्री' इति, पर्शियत्भाषया 'लिलाक्' इति च निर्दिश्यते । एवं हि श्रूयते यत् पर्शियादेशे बलूचिस्थानदेशे वा उत्पन्नः एषः वृक्षः गच्छता कालेन सर्वेषु देशेषु प्रसृतः इति ।

एतस्य वृक्षस्य पुष्पाणि पाटलवर्णीयानि भवन्ति । नीलवर्णीयैः पर्णैः शोभमानः एषः वृक्षः नितरां नयनमनोहरः भवति । एतस्मात् वृक्षात् निर्गच्छन् मधुरतायुक्तः वायुः मनः मोदयति । वसन्तऋतोः आदौ, तन्नाम मार्च्-एप्रिल्मासयोः, एते वृक्षाः पुष्पिताः भवन्ति । ततः पल्लवानाम् उत्पत्तिः दृश्यते । अल्पे एव काले वृक्षः पुष्पैः पर्णैः च पूर्णः भवति । मासद्वयानन्तरं वृक्षे पुष्पाणि अदृश्यतां गच्छन्ति ।

एतस्य फलानि गोलाकाराणि भवन्ति । चतुर्भिः बीजैः युक्तानाम् एतेषां फलानां बाह्यावरणं किञ्चित् कठिनं भवति । पक्षिणः एतस्य फलस्य खादने विशेषासक्तिं प्रदर्शयन्ति । 'मानवानां विषये एतानि फलानि विषायन्ते' इति श्रूयते । एतानि फलानि औषधीयगुणयुक्तानि भवन्ति । विशिष्य सन्धिपीडादीनां निवारणे एतानि उपकुर्वन्ति ।

फलानाम् अन्तः स्थितानि बीजानि हारेषु मणयः इव उपयुज्यन्ते अपि । एतज्जातीयाः वृक्षाः प्रायः १२ - २५ द्वादशाङ्गुलोन्नताः भवन्ति । एते गुल्माकारकाः छत्राकारकाः च भवन्ति । अतः छायादातृत्वेन एतेषां वर्धनं क्रियते लोके । एतज्जातीयानां वृक्षाणां वर्धनं वेगेन भवति ।



अस्मद्देशीयाः ऋषयः

## महीदासः कवशः च

विशालनामकस्य ऋषेः सकाशात् बहवः छात्राः विद्यां गृह्णन्तः आसन् । तेषु तदीयः पुत्रः अपि अन्यतमः आसीत् । कदाचित् तेन पुत्रेण ज्ञातं यत् पिता शिष्यान् यज्ञविधिं बोधयति इति । अतः सः उत्साहेन तत्र गतवान् । किन्तु विशालः तं कार्यान्तरकरणे नियोजयन् अन्यत्र प्रेषितवान् ।

पितुः व्यवहारात् आश्चर्यचकितः खिन्नः च सः कुमारः मातुः समीपं गत्वा - ''पिता मां यज्ञविधिं बोधयितुं न इच्छति इति भाति'' इति उक्तवान् ।

तदा माता क्षणकालं विचिन्त्य उक्तवती - ''भवतः पिता ब्राह्मण-कुलोत्पन्नः । अहं तु कृषिककुले उत्पन्ना । भवतः पिता ब्राह्मणकुलोत्पन्नान् एव यज्ञविधिं बोधयति । किन्तु एतदर्थं भवता चिन्ता करणीया नास्ति । भवान् सर्वाधारां भूदेवीं पूजयतु । सकलसम्पत्तेः विद्यानां च सा मूलम् । करुणामयी सा । तां ये पूजयन्ति ते सकलसम्पत्तिं सकलाः विद्याः च स्वयं प्राप्नुवन्ति'' इति ।

ततः सः कुमारः द्वादश वर्षाणि भूदेवीं भक्त्या सम्पूजयन् प्रकृतिं सूक्ष्मतया परिशीलयन् कृषिम् अनुवर्तितवान् । ज्येष्ठत्वं प्राप्तवान् सः एव महीदासः इति ख्यातिं गतः । मातुः इतरायाः नाम्नः कारणतः तस्य ऐतरेयः इत्यपि नाम अस्ति ।

तेन ऐतरेयब्राह्मणम्, ऐतरेयारण्यकम्, ऐतरेयोपनिषत् इति त्रयः ग्रन्थाः रचिताः । सः ११७ वर्षाणि अजीवत् इति श्रूयते । तस्य मातुः ब्राह्मणेतरत्वम् उपेक्ष्य सर्वे तस्मै गौरवं समर्पयन्ति स्म ।

तेन रचिते ऐतरेयब्राह्मणे कवशनामकस्य ऋषेः प्रस्तावः कृतः दृश्यते । कवशस्य माता अपि न ब्राह्मणकुलोत्पन्ना । कदाचित् सरस्वतीनदीतीरे केचन ऋषयः यदा यज्ञकर्मणि मग्नाः आसन् तदा कवशः तत्र गतः । मुनयः तं पृष्टवन्तः - ''अनाहूतः भवान् किमर्थम् अत्र आगतवान् ?'' इति ।

एतेन खिन्नः कवशः ततः प्रतिगन्तुम् उद्युक्तः । तदा सरस्वतीनद्याः काचित् धारा अग्रे आगत्य तस्य अभिषेकं कृतवती । एतत् दृष्ट्वा सर्वे ऋषयः आश्चर्येण स्तब्धाः अभवन् । कवशस्य महिमानम् अवगच्छन्तः ते तं क्षमां प्रार्थितवन्तः । ततः आरभ्य तं महता आदरेण दृष्टवन्तः च ।



# भवन्तः जानन्ति वा ?

१. कस्मिन् देशे जनाः अग्निपर्वतं कञ्चित् पवित्रतमत्वेन भावयन्ति ? तस्य अग्निपर्वतस्य नाम किम् ?
२. विम्बल्डन्टेन्नीस्स्पर्धायां भागं गृहीतवान् प्रथमः भारतीयः कः ?
३. अस्माकं देशे स्थितस्य मानवनिर्मितस्य कासारस्य नाम किम् ?
४. आभरणनिर्माणसमये सुवर्णेन सह कं लोहं योजयन्ति ?
५. कोलम्बस् कदा भारतम् अन्विष्टवान् ?
६. 'बेङ्गाल्विषादनदी' इति का नदी निर्दिश्यते ?
७. अन्ताराष्ट्रिये न्यायास्थाने कति न्यायाधीशाः भवन्ति ?
८. अस्मद्देशीयः राकेशशर्मा द्वाभ्यां सोवियत्व्योमयात्रिभ्यां सह कदा व्योमयानं कृतवान् ?
९. फाहियान् कदा अस्मद्देशम् आगतवान् आसीत् ?
१०. एशियन्क्रीडाः ऐदम्प्राथम्येन कदा प्रवृत्ताः ?
११. मानवशरीरे स्थितानाम् अस्थ्नाम् उपयोगः कः ?
१२. ताजभवनं (ताजमहल्) केन निर्मितम् ? तस्य निर्माणार्थं कियान् कालः उपयुक्तः ?
१३. मङ्गोलियायाः राजधानी का ?
१४. वल्लभभायीपटेलवर्यः किमर्थं 'सरदार्' इत्युपाधिना निर्दिश्यते ?
१५. प्रपञ्चे आधिक्येन धान्यवाणिज्यं कुत्र प्रचलति ?
१६. अस्मद्देशीयः उन्नतः जलपातः कः ?

## उत्तराणि

१. जपान्देशे । प्युजियामा इति ।
२. सर्दार् निहाल्सिङ्ग् । १९०८ तमे वर्षे ।
३. नर्मदासागर् इति ।
४. ताम्रम् ।
५. १४९२ तमे वर्षे ।
६. दामोदरनदी ।
७. पञ्चदश (१५)
८. १९८४ तमे वर्षे एप्रिल्मासस्य पञ्चमे दिनाङ्के ।
९. ४०१ - ४११ क्रिस्ताब्दयोः मध्ये ।
१०. १९५१ तमे वर्षे ।
११. एतानि मानवशरीरस्य आकारं कल्पयन्ति । मस्तिष्कश्वासकोषादीन् अवयवान् रक्षन्ति च ।
१२. मोगल्चक्रवर्ती शा जहान् । २२ वर्षाणि ।
१३. उलान् बेटिर् ।
१४. गुजरातराज्यस्य बार्डोलीनगरे कर-निकारणप्रयत्नस्य नायकत्वं निरूढवान् इत्यतः ।
१५. अमेरिकादेशे चिकागोनगरे ।
१६. कर्णाटकस्थः जोग्जलपातः ।



# भाग्यशालिता

हरिहरपुरे रामचन्द्रः नाम धनिकः आसीत् । सः औदार्येण प्रभूतं दानं करोति स्म । तस्य समीपं यः गच्छति सः कदापि रिक्तहस्ततया न प्रत्यागच्छति स्म । अतः प्रतिदिनं तस्य गृहं प्रति बहवः धनार्थिनः आगच्छन्ति स्म । एवम् अतिदानात् सः अल्पे एव काले निर्धनः जातः । तस्य पत्नी पूर्वम् एव दिवं गता आसीत् । इदानीं तस्य अद्वितीया सम्पत्तिः नाम पुत्री शकुन्तला एव ।

शकुन्तला रूपेण महासुन्दरी । सा बुद्धिमती कर्तव्याकर्तव्यविवेकवती च आसीत् । 'एतां पुत्रीम् अहं सम्यक् पालयन् न अस्मि' इति चिन्तयन् खेदम् अनुभवति स्म रामचन्द्रः ।

रामचन्द्रस्य व्यथां जानन् तदीयः आप्तस्नेहितः श्रीपतिः शकुन्तलायाः निमित्तं वरान्वेषणम् आरब्धवान् । कृष्णपुरे उद्योगं कुर्वन् श्रीरामः योग्यः वरः इति निश्चितवान् सः । श्रीरामः अपि इच्छति स्म यत् सुन्दरी तरुणी परिणेतव्या इति । अतः श्रीपतिः शकुन्तलायाः रूपगुणादिकं श्रीरामस्य पुरतः वर्णितवान् । एतेन श्रीरामः शकुन्तलायाः दर्शने आसक्तः अभवत् ।

ततः रामचन्द्रस्य गृहम् आगतः श्रीपतिः प्रवृत्तं सर्वं निवेद्य - "वरस्य पिता धनसञ्चयप्रियः । तथापि यदि वरः श्रीरामः शकुन्तलां दृष्ट्वा स्वस्य सम्मतिं प्रदर्शयेत् तर्हि एतस्य विवाहस्य निमित्तं वरस्य पितुः अङ्गीकारं कथञ्चित् प्राप्तुं शक्नुयाम । सर्वं यथाचिन्तितं प्रवृत्तं चेत् अल्पां वरदक्षिणां दत्त्वा विवाहं निर्वर्तयाम" इति उक्तवान् ।

तदा रामचन्द्रः आतङ्कमिश्रितेन स्वरेण - "एतानि दिनानि एव असमीचीनानि । वरदक्षिणारूपेण पञ्चसहस्रं रूप्यकाणि वा दातव्यानि भवेयुः । पुनः विवाहस्य अन्यविधव्ययार्थम् अपि धनम् आवश्यकम् एव । एतस्य सर्वस्य निमित्तं धनं कुतः वा आनयेयम् ? एतं महान्तं व्ययभारं निर्धनः अहं कथं निर्वोढुं शक्नुयाम् ?" इति

"भामहः"

उक्तवान् ।

"मित्र, कष्टानि बहूनि स्युः । तथापि यदा वरः प्राप्यते तदा एव विवाहस्य निर्वर्तनं योग्यः धर्मः । अन्यथा अग्रे बहूनि कष्टानि अनुभोक्तव्यानि भवेयुः । वयं यदा इच्छामः, यदा अस्माकं सर्वविधम् आनुकूल्यं भवति तदा वरः प्राप्येत एव इत्यत्र कः विश्वासः ? भवता धनं कुतः इति पृष्टं खलु ? हाँ, स्मृतम् । पञ्चदशवर्षेभ्यः पूर्वं वाणिज्यनिमित्तम् एतं ग्रामं परित्यज्य नगरं गतः रङ्गनाथः स्मर्यते खलु भवता ?" इति पृष्टवान् श्रीपतिः ।

"स्मरामि एव । मत्तः किञ्चित् धनम् अपि स्वीकृतवान् आसीत् सः । किन्तु न जाने, सः इदानीं कुत्र किं कुर्वन् अस्ति इति । तदस्तु, किमर्थं भवता इदानीं तस्य नाम्नः प्रस्तावः कृतः ?" इति पृष्टवान् रामचन्द्रः ।

"तत्र कारणम् अपि अस्ति । गतसप्ताहे अहं यदा नगरं गतवान् आसं तदा रङ्गनाथमन्दिरं प्रति गच्छन् आसम् । तत्काले रक्षकभटाः 'अपसरन्तु, अपसरन्तु' इति वदन्तः जनान् अपसारयन्तः आसन् । अहं मार्गपार्श्वे स्थित्वा 'कोऽयं महात्मा आगच्छन् अस्ति ?' इति परिशीलितवान् । तत्काले मया चतुर्भिः उद्योगपतिभिः सह आगच्छन् रङ्गनाथः दृष्टः । मया दृष्टः रङ्गनाथः एव वा न वा इति ज्ञातुम् इच्छन् अहं पार्श्वस्थं कञ्चित् पृष्टवान् - 'कोऽयम् आगच्छन् अस्ति ?' इति । तदा तेन उक्तम् - 'धर्ममूर्तिः रङ्गनाथवर्यः एषः । देवालय-पार्श्वे स्थिता धर्मशाला एतेन एव निर्मापिता' इति । एवं महाधनिकत्वं



प्राप्तवान् अपि रङ्गनाथः भवत्तः स्वीकृतं धनम् अद्यावधि न प्रत्यर्पितवान् इति तु मयि आश्चर्यं जनयति । यदा रङ्गनाथः दृष्टः तदा मया एतत्सर्वं स्मृतम् । अतः अहं तेन सह वार्तालापम् अपि अकृत्वा ततः प्रत्यागतः" इति ।

"किम् अन्यकृत्यविमर्शेन ? भगवतः दयया सः सुखेन जीवति खलु । तेन सन्तोषं प्राप्नुयाम वयम्" इति शान्तस्वरेण उक्तवान् रामचन्द्रः ।

"अये, जीवने एतादृशी प्रवृत्तिः न शोभते । दत्तस्य धनस्य अस्वीकारे यदि अनास्था भवति तर्हि भवान् कथं वा पुत्र्याः विवाहं निर्वर्तयेत् ? वरपक्षीयाः आगत्य कन्यां दृष्ट्वा गच्छन्तु नाम । ततः वयं रङ्गनाथसमीपं गत्वा सर्वं निवेद्य तस्य साहाय्यं प्रार्थयाम । यदा वयम् एव गत्वा ऋणप्रत्यर्पणप्रस्तावं करिष्यामः तदा स



ऋणं तु अवश्यं प्रत्यर्पयेत् एव । यदि भगवतः कृपा स्यात् तर्हि दानरूपेण अपि वयं किञ्चित् धनं प्राप्नुयाम'' इति उक्तवान् श्रीपतिः ।

एतं प्रस्तावम् अङ्गीकृतवान् रामचन्द्रः । केषाञ्चित् दिनानाम् अनन्तरं श्रीरामः पित्रा शेषाचार्येण, बान्धवैः च सह आगत्य कन्यां दृष्टवान् । कन्यायाः सौन्दर्यम्, आचारः, व्यवहारः इत्यादयः सर्वेभ्यः वरपक्षीयेभ्यः अरोचत ।

उपाहार-पानीयादीनां सेवनस्य अनन्तरं शेषाचार्यः श्रीपतिम् उक्तवान् - ''श्रीपतिवर्य, एषा कन्या अस्मभ्यम् अरोचत । मम पुत्रः सर्वकारीयोद्योगी इति भवान् जानाति एव । तस्मै कन्यां, विंशतिसहस्राधिकरूप्यकाणां वरदक्षिणां च दातुं शताधिकाः कन्यापितरः सिद्धाः सन्ति । अतः ---- '' इति ।

तदा श्रीपतिः - ''मित्र, रामचन्द्रस्य स्थितिः कीदृशी इति मया उक्तम् एव । कुटुम्बपोषणे एव असमर्थस्य रामचन्द्रस्य वरदक्षिणादानम् एव कष्टकरम् । तथापि अल्पां वरदक्षिणां दद्यात् सः । महता प्रयत्नेन ऋणादिकं कृत्वा अपि सः वरदक्षिणारूपेण पञ्चसहस्राधिकरूप्यकाणि दातुं तु न शक्नुयात् एव'' इति उक्तवान् ।

एतत् श्रुत्वा शेषाचार्यः - ''पञ्चसहस्र-रूप्यकमात्रम् !! नितरां हास्यास्पदम् एतत् । पञ्चदशसहस्रं रूप्यकाणि वा दातव्यानि एव । ततोऽपि न्यूनं धनं मया कथमपि न स्वीक्रियते'' इति उक्तवान् ।

अत्रान्तरे कश्चन अश्वशकटः गृहस्य पुरतः आगत्य अतिष्ठत् । ततः कश्चन युवकः अवतीर्णः । तस्य हस्तद्वये अपि स्यूतः आसीत् । तं दृष्ट्वा आश्चर्यम् अनुभवन् शेषाचार्यः उत्थाय तं युवकं नमस्कुर्वन् - ''आर्य, भवतः आगमनं कथम् अत्र ?'' इति पृष्टवान् ।

युवकः मन्दहासमात्रं प्रकटय्य आश्चर्यान्वितस्य रामचन्द्रस्य समीपं गत्वा पादाभिवन्दनं कृत्वा - ''मम परिचयः न प्राप्तः वा आर्य ? भवतः आप्तमित्रस्य रङ्गनाथस्य ज्येष्ठपुत्रः अस्मि अहम् । पञ्चदशवर्षेभ्यः पूर्वं भवान् यं 'बाल-गोपाल'नाम्ना आह्वयति स्म सोऽयं गोपालः अहम्'' इति हसन् उक्तवान् ।

एतत् श्रुत्वा महान्तं सन्तोषम् अनुभवन् रामचन्द्रः - ''अहो, गोपाल, भवतः ज्येष्ठत्वकारणतः झटिति अहम् अभिज्ञातुं न शक्तवान् । चिरकालानन्तरं भवतः दर्शनम् । भवतः मातापितरौ किं

कुशलिनौ ? अपि भवान् कुशली ?'' इति पृष्ठवान् ।

''सर्वे कुशलिनः'' इति रामचन्द्रम् उक्त्वा शेषाचार्यं पश्यन् - ''केन उद्देशेन भवद्भिः अत्र आगतम् ?'' इति पृष्टवान् गोपालः ।

शेषाचार्यः शकुन्तलाम् अङ्गुल्या निर्दिशन् - ''एतस्याः मम पुत्रस्य च विवाहः निर्वर्तनीयः इति उद्देशेन वयम् अत्र आगताः । वधूः सर्वेषाम् इष्टाय जाता अपि । किन्तु एषः भवतः 'आर्यः' अस्माभिः अपेक्षितस्य वरदक्षिणाधनस्य दाने असम्मतिं प्रदर्शयन् अस्ति । सर्वकारीये उद्योगे स्थितस्य मम पुत्रस्य विवाहम् अल्पवरदक्षिणास्वीकारेण निर्वर्तयितुं मम इच्छा सर्वथा नास्ति । वरदक्षिणादातॄणां कन्यकानां वा अभावः नास्ति लोके । अतः वयम् इदानीं प्रस्थिताः'' इति उक्त्वा ततः निर्गन्तुम् आसनात् उत्थितवान् ।

तदा गोपालः शेषाचार्यम् उद्दिश्य - ''आदौ ममागमनोद्देशः पृष्टः आसीत् खलु भवता ? तं विवृणोमि, शृणोतु तावत् । मम पितुः अनुज्ञां प्राप्य एतां रामचन्द्रवर्यस्य पुत्रीं मद्गृहस्य स्नुषात्वेन, तन्नाम मम पत्नीत्वेन, स्वीकर्तुम् अहम् अत्र आगतवान् आसम् । भवतः सर्वान् दृष्ट्वा सकृत् चिन्तितवान् आसं यत् मया आगमने विलम्बः कृतः इति । किन्तु प्रवृत्तं सर्वं पश्यामि चेत् भासते यत् मया समये एव उपस्थितम् इति । तत् आस्तां तावत् । मम पितुः अपेक्षायाः पूरणे साहाय्यम् आचरता भवता विशेषोपकारः कृतः । तदर्थम् अहं कृतज्ञः अस्मि'' इति उक्तवान् ।



गोपालस्य वचनस्य आशयं ज्ञात्वा लज्जया शिरः अवनमय्य वेगेन ततः निर्गतवान् शेषाचार्यः । अन्ये तद्बान्धवाः तम् अनुसृतवन्तः ।

तेषां सर्वेषां निर्गमनस्य अनन्तरं गोपालः शकुन्तलां कटाक्षेण सकृत् दृष्ट्वा रामचन्द्रम् उद्दिश्य उक्तवान् - ''भवताम् अभिप्रायम् अज्ञात्वा मया यत्किञ्चित् उक्तम् । तदर्थं क्षमां प्रार्थये'' इति ।

सर्वेषु आश्चर्येण पश्यत्सु सः स्वस्य कथनम् अनुवर्तितवान् - ''पञ्चदशवर्षेभ्यः पूर्वं मम पिता भवत्तः धनं स्वीकृत्य नगरं गतवान् आसीत् । तत्र वाणिज्येन सः प्रभूतं धनं सम्पादितवान् । वर्षानन्तरम् ऋणधनं तद्वृद्धिधनं च भवते दातुं मम पिता उद्युक्तः आसीत् । तदा तेन ज्ञातं यत् भवतः स्वभावे परिवर्तनं किमपि न जातं, दानव्याजेन भवान् निर्धनतागर्ते पतन् अस्ति इति । अतः मम

पिता भवते धनस्य दानस्य विचारं परित्यक्तवान् । तदेव धनं भवन्नाम्नि वाणिज्ये विनियुक्तवान् सः । प्रतिवर्षं प्राप्तं लाभधनम् अपि सः पुनरपि वाणिज्ये विनियुक्तवान् । तदेव धनम् अस्ति स्यूतद्वये । किन्तु ----''

''कथनम् अनुवर्तयतु तावत् । यद् वक्तव्यं तत् निस्सङ्कोचं वक्तुम् अर्हति भवान्'' इति उक्तवान् रामचन्द्रः ।

गोपालः शकुन्तलां पश्यन् लज्जामिश्रितेन स्वरेण - ''एषा भवतः पुत्री स्नुषात्वेन प्राप्तव्या इति मम मातापित्रोः इच्छा । तौ भवद्विषये भवत्परिवारविषये च विशेषादरवन्तौ स्तः । 'यदि वधूः ससन्तोषम् अङ्गीकरोति तर्हि एव विवाहः' इति मया उक्तम् । 'एवं तर्हि सर्वं ज्ञात्वा आगच्छतु' इति आदिश्य मां प्रेषितवन्तौ स्तः मातापितरौ । भवतः पुत्रीं परिणेतुम् अहं तु सिद्धः अस्मि । इतः परं भवन्तः प्रमाणम्'' इति उक्तवान् ।

एतत् श्रुत्वा महान्तं सन्तोषम् अनुभवन्तौ श्रीपतिः रामचन्द्रः च प्रश्नार्थकदृष्ट्या शकुन्तलां दृष्टवन्तौ । तयोः आशयं जानती शकुन्तला लज्जया आरक्तं मुखम् अवनमय्य क्षीणेन मधुरस्वरेण उक्तवती - ''ज्येष्ठाः भवन्तः यत् वदन्ति तदनुगुणम् आचरामि अहम् । भवतां निर्णयः ममापि प्रियः एव'' इति ।

शकुन्तलायाः अङ्गीकारात् नितरां सन्तुष्टः रामचन्द्रः गोपालं प्रीत्या आलिङ्ग्य - ''वत्स, सर्वं पूर्वजन्मनः पुण्यस्य फलम् । मम पुत्री सौभाग्यवती अस्ति । अतः भवन्तं पतित्वेन प्राप्तुम् अवकाशं लब्धवती । भवन्तं जामातृत्वेन प्राप्नुवन् अहम् अपि भाग्यशाली एव'' इति आनन्दाश्रूणि स्त्रावयन् उक्तवान् ।

तदा श्रीपतिः सन्तोषं प्रकटयन् उक्तवान् - ''गोपाल, मित्रपदयोग्यः भवतः पिता । अप्रियम् अपि हितम् एव आचरता तेन मित्रत्वं प्रमाणीकृतम् । अपारां सम्पत्तिं, अमूल्यं स्नेहम्, अपूर्वं जामातरं च प्राप्नुवन् रामचन्द्रः भाग्यशाली एव । तुष्टः देवः सौभाग्यं वर्षति इत्येतत् सत्यम् एव'' इति ।

ततः गोपालं शकुन्तलां च प्रीत्या अभिमानेन च आशिषा अनुगृहीतवान् श्रीपतिः ।






# मुखद्वारस्य प्रशंसा

समीरः सुधीरश्च अभिन्नग्रामवासिनौ । बाल्यात् एव तयोः महती आत्मीयता आसीत् । केषाञ्चित् वर्षाणाम् अनन्तरं समीरः उद्योगनिमित्तं सुदूरप्रदेशं गतवान् । सुधीरः तु स्वग्रामे एव निवसन् कृषिवृत्तिम् अनुवर्तितवान्, प्रभूतं धनं सम्पादितवान् च । गच्छता कालेन तस्य विवाहः अपि जातः । नूतनं गृहं निर्माय सुखेन वासम् आरब्धवान् सः ।

ग्रामं परित्यज्य गतः समीरः सप्तवर्षाणाम् अनन्तरं प्रत्यागतवान्, बाल्यस्नेहितं सुधीरं द्रष्टुम् इष्टवान् च । पूर्वं यत्र लघुगृहम् आसीत् तत्र इदानीं विशालं भवनं दृश्यते स्म । गृहस्य पुरतः स्थितः तिन्त्रिणीवृक्षः विशेषवृद्धिं गतः आसीत् । वृक्षस्य अधः आसनानि अपि कल्पितानि आसन् । एतत्सर्वं दृष्ट्वा समीरः चिन्तितवान् यत् सुधीरस्य आर्थिकस्थितिः उत्तमा अस्ति इति ।

यदा समीरः द्वारसमीपं गतवान् तदा कश्चन शुनकः उच्चैः भषणम् आरब्धवान् । शुनकस्य भषणशब्दं श्रुत्वा सुधीरस्य पत्नी द्वारम् उद्घाट्य बहिः आगतवती । शुनकस्य भषणं स्थगयित्वा आश्चर्यमिश्रितदृष्ट्या समीरं दृष्टवती च ।

तदा समीरः पृष्टवान् -"सुधीरस्य गृहम् एव खलु एतत् ?" इति ।

"आम्" इति वदन्ती अङ्गीकारपूर्वकं शिरः चालितवती सुधीरपत्नी ।

"सुधीरः गृहे अस्ति, उत कार्यनिमित्तम् अन्यत्र कुत्रापि गतवान् ?" इति पृष्टवान् समीरः ।

"सः बहिः गतः अस्ति । किन्तु कुत्र गतः इति तु मया न ज्ञायते" इति उक्तवती सुधीरपत्नी ।

"मम नाम समीरः इति । सुधीरस्य बाल्यस्नेहितः अस्मि । सप्तवर्षाणाम् अनन्तरं तं द्रष्टुम् आगतवान् अस्मि" इति उक्तवान् समीरः ।

एतत् श्रुत्वा अपि सुधीरपत्नी किमपि न

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा

उक्तवती एव । न स्नेहभावं प्रदर्शितवती, न वा 'अन्तः आगच्छतु' इति निमन्त्रितवती ।

समीरः गृहस्य पुरतः एव उपविशन् उत्तरीयेण स्वेदं मार्जयन् पृष्टवान् - ''भगिनि ! सुधीरस्य पत्नी एव खलु भवती ?'' इति ।

''आम्'' इति उक्त्वा मौनम् आश्रितवती सुधीरपत्नी ।

क्षणकालानन्तरं समीरः सुधीरपत्नीम् उक्तवान् - ''अहो घर्मः ! महती पिपासा मम । पातुं किञ्चित् जलं दद्यात् वा भवती ?'' इति ।

सुधीरपत्नी अन्तः गत्वा जलम् आनीय दत्तवती । तत् अशीतलं किञ्चित् अस्वच्छं च आसीत् । समीरः तत् किञ्चित् पीतवान् इव अभिनीय बहिः क्षिप्त्वा चषकं तस्यै प्रत्यर्पयन् - ''भगिनि, साधयामि तावत् । सुधीरेण मेलनीयम् इति उद्देशेन मया अत्र आगतम् आसीत् । किन्तु तस्य दर्शनभाग्यं न प्राप्तं मया । सः यदा प्रत्यागमिष्यति तदा तं वदतु यत् बाल्यस्नेहितः समीरः आगतः आसीत् इति । तम् एतदपि वदतु यत् अहं तस्य अभिवृद्धेः दर्शनात् नितरां सन्तुष्टः अस्मि इति । किन्तु मह्यम् एतस्य गृहस्य द्वारं सर्वथा न अरोचत । भगिनि, स्पष्टोक्त्यै क्षन्तव्यः अहम् । एतत् द्वारं समीचीनं नास्ति । अहं तक्षकवृत्तिम् अपि जानामि इत्यतः दर्शनमात्रेण भवनस्य अङ्गानां गुणावगुणादिकं झटिति ज्ञातुं शक्नोमि । मम तु भाति यत् सुधीरः द्वारविषये अधिकम् अवधानं न दत्तवान् इति । मुखद्वारविषये इतोऽपि अधिकं चिन्तनं वरम् इति तं वदतु भवती'' इति उक्त्वा ततः निर्गतवान् ।

अन्धकारप्रसारस्य अनन्तरं सुधीरः प्रत्यागतवान् । तदा सः ज्ञातवान् यत् समीरः आगतः आसीत्, प्रतिगतवान् चापि इति । अतः नितरां खिन्नः सः पत्नीम् उक्तवान् -



''भवत्या सानुरोधं वक्तव्यम् आसीत् यत् अद्य अत्रैव स्थातव्यम् इति । अनुचितं कृतं भवत्या । इतः गमनसमये किम् उक्तवान् सः ? स्वस्थलं प्रति गमनं कदा तस्य ?'' इति ।

''तदहं न जानामि । प्रतिगमनादिविषये किमपि न उक्तवान् एव सः । किन्तु एतत् उक्तवान् यत् गृहं सुन्दरम् अस्ति चेदपि द्वारम् उत्तमं नास्ति इति । मुखद्वारं सर्वथा सम्यक् नास्ति इति तस्य आशयः । 'एतं विषयम् आर्यपुत्रं मद्वचनैः वदतु' इति उक्त्वा गतवान् अस्ति सः'' इति उक्तवती पत्नी ।

एतत् श्रुत्वा सुधीरः आश्चर्यसागरे निमग्नः जातः । तेन मुखद्वारं सुसूक्ष्मं परिशीलितम् । तथापि तत्र तेन एकः अपि लोपः न दृष्टः ।

पुनः एकं वर्षम् अतीतम् । ग्रीष्मकालः आगतः । समीरः कस्यचित् कार्यस्य निमित्तं पुनरपि तं ग्रामम् आगतवान् । सः निश्चितवान् यत् एतस्मिन् सन्दर्भे वा सुधीरं दृष्ट्वा एव गन्तव्यम् इति । अतः सः सुधीरगृहं गत्वा उच्चैः आहूतवान् - ''सुधीर, रे सुधीर !'' इति ।

तदा सुधीरस्य पत्नी द्वारम् उद्घाट्य बहिः आगतवती । समीरं दृष्ट्वा सन्तोषं प्रकटयन्ती - ''आगच्छतु, अन्तः आगच्छतु तावत्'' इति निमन्त्रितवती ।

''किं सुधीरः गृहे अस्ति इदानीम् ?'' इति पृच्छन् द्वारसमीपे एव स्थितवान् समीरः ।

''स तु बहिः गतः अस्ति । अचिराद् एव प्रत्यागच्छेत् सः । भवान् अन्तः आगच्छतु तावत्'' इति प्रीतिमिश्रितेन स्वरेण उक्तवती सुधीरपत्नी ।

''आतपकाले वृक्षच्छाया एव हितकरी । अतः अहं वृक्षस्य अधः उपविशामि'' इति वदन् वृक्षस्य अधः उपवेष्टुम् उद्युक्तः समीरः ।





तदा सुधीरपत्नी - ''किम् एतत् ? गृहे सति वृक्षस्य अधः उपवेशनं कथं शोभते ? किम् अस्माकं बान्धव्यस्य उचितम् एतत् ? यदि भवान् वृक्षस्य अधः उपविशेत् तर्हि प्रतिवेशिनः अस्मद्विषये किं वा भावयेयुः ? अस्मान् अतिथिसत्कारानभिज्ञान् वदेयुः खलु ते ? अन्यच्च वृक्षस्य अधः आत्मीयस्य भवतः उपवेशनम् अस्माकं मनः अपि कथं वा अङ्गीकुर्यात् ?'' इति वदन्ती अनुरोधपूर्वकं तं गृहस्य अन्तः नीतवती ।

सुधीरपत्न्या प्रदर्शिते मञ्चे उपविशन् समीरः - ''एतत्सन्दर्भे वा सुधीरस्य मेलनं भवेत् इति अहं चिन्तितवान् आसम् । किन्तु एतत्सन्दर्भे अपि मित्रस्य दर्शनसौभाग्यं मम नास्तीति भाति'' इति सनिःश्वासम् उक्तवान् ।

पाकशालां गता सुधीरपत्नी स्थालिकायां चषकत्रयं स्थापयित्वा आगतवती । तेषु एकस्मिन् शीतलजलं, अन्यस्मिन् नारिकेलजलम्, अपरस्मिन् तक्रं च आसीत् । सर्वं समीरस्य पुरतः संस्थाप्य - ''स्वीकरोतु तावत् । भोजनसमये प्रायः प्रत्यागच्छेत् आर्यपुत्रः । तावत्-पर्यन्तं विश्रान्तिसुखम् अनुभवतु भवान्'' इति उक्तवती । एतत्सर्वं दृष्ट्वा समीरः चिन्तितवान् - 'सुधीरपत्न्यां महत् परिवर्तनं दृश्यते' इति ।

अल्पे एव काले पाकं सज्जीकृत्य पाकशालातः बहिः आगता सुधीरस्यपत्नी समीरम् उक्तवती - ''भवान् भोजनं करोतु'' इति ।

''सुधीरः एतावता अपि न आगतः खलु ? सः अपि आगच्छतु नाम'' इति उक्तवान् समीरः ।

''बहिः गच्छति चेत् सः भोजनसमयादिकं सर्वथा विस्मरति । किं तस्य प्रतीक्षया ? भवान् भोजनं करोतु'' इति उक्त्वा समीरं भोजनार्थं नीतवती सुधीरपत्नी । समीरस्यापि महती बुभुक्षा आसीत् । अतः सः भोजनार्थम् उपविष्टवान् । पाकः रुचिकरः आसीत् । आतृप्ति भुक्त्वा विश्रान्तिसुखम् अनुभूतवान् समीरः । सायङ्कालः जातः चेदपि सुधीरः न प्रत्यागतः ।

अतः समीरः सुधीरपत्नीम् उक्तवान् - ''मम विलम्बः जातः । सुधीरस्य मेलनम् एतत्सन्दर्भे अपि असम्भवं जातम्'' इति ।

''भवान् अद्य अत्रैव तिष्ठतु । रात्रौ तु अवश्यं प्रत्यागच्छेत् एव आर्यपुत्रः । भवतः दर्शनात् महान्तम् आनन्दम् अनुभविष्यति सः । श्वः प्रातः भवान् इतः गन्तुम् अर्हति''

इति उक्तवती सुधीरपत्नी ।

"न शक्यते भगिनि । अहं यात्रिजनैः सह अत्र आगतः । एतावता एव ते मम प्रतीक्षां कुर्वन्तः स्युः । अतः मया गन्तव्यम् एव । पुनः कदाचित् एवम् एव यदा मम आगमनं सम्भवेत् तदा तेन मेलिष्यामि" इति उक्तवान् समीरः ।

तदा सुधीरपत्नी उक्तवती - "द्वितीयवारम् अपि आगतस्य भवतः मेलनं न जातम् इत्येतत् मम आर्यपुत्रस्य खेदाय भवेत् एव । भवान् यात्रिजनान् अग्रे प्रेषयतु । श्वः यानेन गत्वा तैः सह सम्मिलितः भवतु" इति ।

"तत्सर्वं न शक्यते, यतः तेषां नायकः अहम् एव अस्मि । अतः इदानीं मया गन्तव्यम् एव । सुधीरं भवती वदतु - अहं तं बहुधा स्मृतवान् इति । एतस्य गृहस्य उद्यानम् उत्तमम् अस्ति । मुखद्वारं सर्वश्रेष्ठम् अस्ति । एतं विषयम् अपि सुधीरं वदतु" इति उक्त्वा ततः निर्गतवान् समीरः ।

रात्रौ विलम्बेन प्रत्यागतं पतिं समीरागमनं निवेदितवती पत्नी । सर्वं श्रुत्वा सुधीरः उक्तवान् - "तस्य दर्शनभाग्यम् एतत्सन्दर्भे अपि न प्राप्तं मया ! अहो दौर्भाग्यं मम ! दर्शनीयः सः, सुयोग्यः सः, बुद्धिमान् सः" इति ।

"गतसन्दर्भे यदा सः आगतः आसीत् तदा उक्तवान् आसीत् यत् मुखद्वारं सम्यक् नास्ति इति । एतत्सन्दर्भे मुखद्वारस्य विशेषप्रशंसा तेन कृता । द्वारं तु गतसन्दर्भे यत् आसीत् तदेव अस्ति इदानीम् अपि" इति उक्तवती सुधीरपत्नी ।

तदा सुधीरः उक्तवान् - "गतसन्दर्भे आगतः समीरः उक्तवान् आसीत् यत् मुखद्वारं सम्यक् नास्ति इति । तदा मया तस्य कथनस्य तात्पर्यं न अवगतम् आसीत् । एतत्सन्दर्भे यदा सः द्वारस्य प्रशंसां कृतवान् तदा मया सर्वम् अवगतम् । पूर्वं यदा सः आगतः तदा भवत्या तस्य सत्कारः सम्यक् न कृतः स्यात् । अतः तेन उक्तं - 'द्वारं सम्यक् नास्ति' इति । एतत्सन्दर्भे भवती अतिथिसत्कारं सम्यक् कृतवती इति मन्ये । अतः सः मुखद्वारस्य प्रशंसां कृतवान् अस्ति" इति ।

एतत् विवरणं श्रुतवत्या सुधीरपत्न्या सर्वं सम्यक् अवगतम् ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां सप्टम्बर् - १९९६ मासे प्रकटयिष्यामः ।



S.G. SESHAGIRI



S.G. SESHAGIRI

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'मे'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **किं मूल्यम् अर्हति गृहीतोऽयं मत्स्यः ?**

द्वितीयचित्रम् - **गणनानन्तरम् एव ज्ञायते मूल्यम् अस्य फलगुच्छस्य ।**

प्रेषकः - पि. सत्यनारायणमूर्तिः, गृ.सं. १३-४-४(३) पद्मसालील वीथी, वेतनीपेटमार्गः, भीमवरम् - १ (आ.प्र.)




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# जीवन में हो उमंग, मधुरता के संग.



तुलसी रोपूँ अपने अंगना
इसकी वृद्धि कभी रूके ना



अंधे चाचा कंवर बेचारे,
माता-पिता सा मुझे दुलारें
मैं भी उनके साथ जाउंगी,
उनको सड़क पार कराउंगी.



अरे हाँ। डैडी को हो गया है फ्लू
और मम्मी ने कहा है कि मैं उन्हें
दवा पिला दूं.



छुट्टी ले गंगूबाई की मौज
बर्तनों की जुटी है फौज
कहाँ से आई इतनी आफ़त
मेरी, राधा मौसी को मुसीबत



जब तक पेटू राजू आए
काजू बरफी मेरी चट कर जाए
उससे पहले स्मिता खाले
चाहे मुझे बिल्कुल न मिले.



टॉमी जब भी करता मस्ती
उसको चोट बहुत है लगती
डॉक्टर की दी दवा लगाऊँ
उसके ज़ख्मों को सहलाऊँ



राजीव अंकल सुधारें कार
मेरी मदद उन्हें दरकार
मैंने उनका हाथ बंटाया
मम्मी सोचें काम बढ़ाया



चंद्रा टीचर पढ़ातीं हिसाब
मैंने उनको दिए गुलाब
कितने, इसका नहीं हिसाब




मीठी-मीठी कामयाबी का रस... बरसों-बरस.

